मण्डूकेन पशूनां तस्मान्मण्डूकः पशूनामनुपजीवनीयतमो यातयामा हि सोऽवकाभिरपां तस्मादवका अपामनुपजीवनीयतमा यातयाम्न्यो हि ता वेतसेन वनस्पतीनां तस्माद्वेतसो वनस्पतीनामनुपजीवनीयतमो यातयामा हि सः॥१७॥

तानि वꣳशे प्रबध्य दक्षिणार्धेनाग्नेरन्तरेण परिश्रितः प्रागग्रे विकर्षति समुद्रस्य त्वावकयाग्ने परिव्ययामसि पावको अस्मभ्यꣳ शिवो भवेति समुद्रियाभिस्त्वाद्भिः शमयाम इत्येतत्॥१८॥

अथ जघनार्धेनोदग्घिमस्य त्वा जरायुणाग्ने परिव्ययामसि पावको अस्मभ्यꣳ शिवो भवेति यद्वै शीतस्य प्रशीतं तद्धिमस्य जरायु शीतस्य त्वा प्रशीतेन शमयाम इत्येतत्॥१९॥

अथोत्तरार्धेन प्रागुपज्मन्नुप वेतसेऽवतर नदीष्वा अग्ने पित्तमपामसि मण्डूकिताभिरागहि सेमन्नो यज्ञं पावकवर्णꣳ शिवं कृधीति यथैव यजुस्तथा बन्धुः॥२०॥

अथ पूर्वार्धेन दक्षिणापामिदं न्ययनꣳ समुद्रस्य निवेशनं अन्याꣳस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भवेति यथैव यजुस्तथा बन्धुरित्यग्रे विकर्षत्यथेति अथेत्यथेति तद्दक्षिणावृत्तद्धि देवत्रात्मानमग्रे विकर्षत्यात्मा ह्येवाग्रे संभवतः संभवत्यथ दक्षिणं पक्षमथ पुच्छमथोत्तरं तद्दक्षिणावृत्तद्धि देवत्राभ्यात्म[12] पक्षपुच्छानि विकर्षत्यभ्यात्ममेव तच्छान्तिं धत्ते परस्तादर्वाक् परस्तादेव तदर्वाचीꣳ शान्तिं धत्तेऽग्ने पावकरोचिषेति दक्षिणं पक्षꣳ स नः पावक दीदिव इति पुच्छं पावकया यश्चितयन्त्या कृपेत्युत्तरं पावकं पावकमिति यद्वै शिवꣳ शान्तं तत्पावकꣳ

१२. अभ्यात्मन् पक्ष My

food. All these are indeed, food — the frog, the lotus-leaf, the bamboo shoot; for, these indeed are (representing) animals, waters and trees. Thus he appeases him by means of all kinds of food. By the frog, the animal part (of the food); for, frog among the animals is the one which provides least subsistence; because it is used up. By the lotus-flower, the water part (of the food). Therefore among water, lotus-flower has the least subsistence, because they are used up. By the bamboo shoot, the plant part (of the food); therefore among the trees, the bamboo has least subsistence; it is indeed used up.

**18.** Having tied them to a cane; he first drags them eastwards along the southern side of the altar within the enclosing stones. (He says) "We encompass you, O Agni ! with the lotus-flower of the ocean; you may be purifying and propitious for us." (This means) "I appease you with the waters of the ocean."

**19.** Then along the head part northwards (he drags them) (saying) "We encompass you with the outer placenta of ice; you may be purifying and propitious for us." That part of water which is coldest is called the placenta of the ice. (It means — we appease you with the frozen part of the cold.

**20.** Then along the left side, eastwards (he drags them), (saying) "Upon the earth, into the reed, into the rivers, you descend, O Agni; you are the side of the waters; with them you come to the she-frog, and make this sacrifice of ours shine forth and propitious for us." As the text so the meaning.

**21.** Then along with front side, southwards (he drags them) (saying) "You are the abode of waters and the home of the ocean. Let your arrows burn our foes. Be you purifying and propitious unto us" — as the text so the meaning. He drags them thus and in this way from left to right and that is the practice for gods. He drags over the body (of the altar in the form of the bird), because the body that is born first is of (the bird). Then over the right wing, then the tail and then over the left wing. That is how, it is from left to right. That is the course of the gods. Over the wings and tail, he drags them towards the direction of the body. Thus he confers that calmness towards the body proper, from the fingers towards the middle. (He drags) over the right wing (saying), "O Agni ! with your bright height." Over the

शमयत्येवैनमेतत्सप्तभिर्विकर्षति सप्तचितिकोऽग्निः सप्तर्तवः संवत्सरः संवत्सरोऽग्नि-
र्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्विकर्षति तं वꣳशमुत्करेन्यस्य॥ २१॥

अथैनꣳ सामभिः परिगायत्यत्रैष सर्वोऽग्निः सꣳस्कृतस्तस्मिन्देवा एतदमृतꣳ रूप-
मुत्तममदधुस्तथैवास्मिन्नयमेतदमृतꣳ रूपमुत्तमं दधाति सामानि भवन्ति प्राणा वै सामान्यमृतमु
वै प्राणा अमृतमेवास्मिन्नेतद्रूपमुत्तमं दधाति सर्वतः परिगायति सर्वत एवास्मिन्नेतदमृतꣳ रूपमुत्तमं
दधाति ॥ २२॥

यद्वेवैनꣳ सामभिः परिगायत्येतद्वै देवा अकामयन्तानस्थिकमिमममृतमात्मानं कुर्वीमहीति
तेऽब्रुवन्नुप तज्जानीत यथेममात्मानमनस्थिकममृतं करवामहा इति तेऽब्रुवꣳश्चेतयध्वमिति
चितिमिच्छतेति वाव तदब्रुवꣳस्तदिच्छत यथेममात्मानमनस्थिकममृतं करवामहा इति॥ २३॥

ते चेतयमाना एतानि सामान्यपश्यꣳस्तैरेनं पर्यगायꣳस्तैरेतमात्मानमनस्थिकममृतमकुर्वत
तथैवैतद्यजमानो यदेनꣳ सामभिः परिगायत्येतमेवैतदात्मानमनस्थिकममृतं कुरुते सर्वतः
परिगायति सर्वत एवैतदेतमात्मानमनस्थिकममृतं कुरुते तिष्ठन्गायति तिष्ठन्तीव वा इमे लोका
अथो तिष्ठन्वै वीर्यवत्तरो हिंकृत्य गायति तत्र हि सर्वं कृत्स्नꣳ साम भवन्ति॥ २४॥

गायत्रं पुरस्ताद्गायत्यग्निर्वै गायत्रमग्निमेवास्यैतच्छिरः करोत्यथो शिर एवास्यैतदनस्थिकममृतं
करोति॥ २५॥

रथन्तरं दक्षिणे पक्ष इयं वै रथन्तरमियमु वा एषां लोकानाꣳ रसतमोऽस्याꣳ हीमे सर्वे रसा

tail (saying), "To us O bright and shining Agni." Over the left wing (saying), "He who with bright and glittering bright." He thus (each time) represents the word "bright" for whatever is kindly and propitious is bright. He thus propitiates him. With seven (*mantras*) he drags them across, for, the altar consists of seven layers and seven are the seasons of a year and *Agni*-altar is the year. As great as Agni is, as great as is his size, with so much he thus crosses him (with them). Then after throwing that cane in the *utkira* (dustbin).

**22.** Then he sings *Sāmans* round(the altar). For it is by them that the whole Agni is fashioned. On him, the gods bestowed that highest form of immortality. In same manner, this (Yajamāna) bestows on him the highest form of immortality. *Sāmans* are sung, for, *Sāmans* are the *prāṇas* and *prāṇas* are immortality. Thus immortality, that highest form, he confers on him. On every side he sings around it. Thereby everywhere he bestows that highest form of immortality in him.

**23.** And as to why he sings *Sāmans* around him is this — the gods thought thus, "Let us make our bodies boneless and immortal." They said (of the process) "By which we can render our these bodies boneless and immortal." They said, "Meditate" by which they meant, "wish for a layer, find out how we may make ours this body of boneless and immortal."

**24.** Meditating they saw these *Sāmans*; with them they sang round him (altar). By means of that they rendered their body boneless and immortal. In same manner this Yajamāna, by singing these *Sāmans* round him, renders his body boneless and immortal. He sings all around and every where he makes his body boneless and immortal. He sings while standing, because these worlds are as if, standing. By standing one is stronger. He sings after uttering *hiṁkāra* (the syllable "*HIM*"), for therein the *Sāman* becomes complete and whole.

**25.** First he sings the Gāyatra *Sāman*, for, Gāyatrī metre is fire; he thus makes the fire itself his head. By that he makes his (altar's) head boneless and immortal.

**26.** He sings the Rathantara *Sāman* at the right side wing (of the bird-shaped altar). Rathantara is this earth and this (earth) is the most juicy (full of sap) among these worlds, for it is here that all these essence are

रसन्तमः ह वै तद्रथन्तरमित्याचक्षते परोक्षं परोक्षकामा हि देवा इमामेवास्यैतद्दक्षिणं पक्षं करोत्यथो दक्षिणमेवास्यैतत्पक्षमनस्थिकममृतं करोति॥ २६॥

बृहदुत्तरे पक्षे द्यौर्वै बृहद्द्यौर्हि बर्हिष्ठा[13] दिवमेवास्यैतदुत्तरं पक्षं करोत्यथो उत्तरमेवास्यैतत्पक्षमनस्थिकममृतं करोति॥ २७॥

वामदेव्यमात्मन्प्राणो वै वामदेव्यं वायुरु प्राणः सर्वेषामु हैष देवानामात्मा यद्वायुर्वायुमेवास्यैतदात्मानं करोत्यथो आत्मानमेवास्यैतदनस्थिकममृतं करोति॥ २८॥

यज्ञायज्ञियं पुच्छं चन्द्रमा वै यज्ञायज्ञियं यो हि कश्च यज्ञः संतिष्ठत एतमेव तस्याहुतीनाः रसो व्येति तद्यदेतं यज्ञो यज्ञोऽप्येति तस्माच्चन्द्रमा यज्ञायज्ञियं चन्द्रमसमेवास्यैतत्पुच्छं करोत्यथो पुच्छमेवास्यैतदनस्थिकममृतं करोति॥ २९॥

अथ प्रजापतेर्हृदयं गायत्यसौ वा आदित्यो हृदयः श्लक्ष्ण एष श्लक्ष्णः हृदयं परिमण्डल एष परिमण्डल ः हृदयमात्मन्गायत्यात्मन्हि हृदयं निकक्षे निकक्षे हि हृदयं दक्षिणे निकक्षेऽतो हि हृदयं नेदीय आदित्यमेवास्यैतद्धृयंदयं करोत्यथो हृदयमेवास्यैतदनस्थिकममृतं करोति॥ ३०॥

प्रजासु च प्रजापतौ च गायति तद्यत्प्रजासु गायति तत्प्रजासु हृदयं दधात्यथ यत्प्रजापतौ गायति तदग्नौ हृदयं दधाति॥ ३१॥

यद्वेव प्रजासु च प्रजापतौ च गायत्ययं वा अग्निः प्रजाश्च प्रजापतिश्च तद्यदग्नौ गायति तदेव प्रजासु च प्रजापतौ च हृदयं दधाति ता हैता अमृतेष्टकास्ता उत्तमा उपदधात्यमृतं तदस्य

१३. बहिष्ठा My

contained. It is *rasantama* (most juicy) that is called Rathantara in a concealed way; for the gods, indeed like mystic appellations. He thus makes the (earth), his (bird-shaped altar's) right wing. Thereby his right wing becomes boneless and immortal.

**27.** He sings the Bṛhad *Sāman* at the left wing. Bṛhad is the sky. The sky is the greatest (of the worlds). Thereby he makes the sky itself his(bird-shaped altar's) left wing. Thus he renders that left wing of his, boneless and immortal.

**28.** He sings the Vāmadevya *Sāman* at the body (of the altar). Vāmadevya is the *prāṇa* and *prāṇa* is wind. That which is wind is the body of all these gods. Thus he makes Vāyu itself the body (of the bird shaped altar). Thereby he renders his body itself boneless and immortal.

**29.** He sings the Yajñāyajñiya *Sāman* at the tail. Yajñāyajñiya is the moon; for, whenever a sacrificer attains completion, the essence of its oblation reaches him (the moon). In as much as by each sacrifice it (the essence) reaches him (the moon), the moon is Yajñāyajñiya. Thereby he makes the moon itself his (bird-shaped altar's) tail. Thus he renders his tail boneless and immortal.

**30.** He then sings (that *Sāman*) which is known as the heart of Prajāpati. The heart is yonder sun. He is oily; for, the heart is oily (smooth). He (the sun) is round; so too the heart is round. He sings on the body (of the altar) — for, the heart is in the body. He sings at the arm-pit (of the bird) because the heart is in the arm-pit. He sings at the right arm-pit because the heart is nearer (to the right arm-pit). Thus he makes the sun itself his (bird-shaped altar's) heart. Thereby he renders his heart itself boneless and immortal.

**31.** He sings on Prajās (progeny) and Prajāpati (creator). When he sings on Prajās, he places the heart into the offspring. When he sings on Prajāpati, he places heart in the fire-altar.

**32.** And as to why he sings on Prajās and Prajāpati is this – this *Agni*-altar is both progeny and the creator. By singing on the *Agni*-altar, he places heart both in the Prajā (offspring) and Prajāpati (lord of the offspring). These (*Sāmans*) are the immortal bricks and hence he lays them down, last (at the top of all). He thus makes immortality the highest in this whole

सर्वस्योत्तमं दधाति तस्मादस्य सर्वस्यामृतमुत्तमं नान्योऽध्वर्योर्गायेदिष्टका वा एतानि चितो ह स्याद्यदन्योऽध्वर्योर्गायेत् ॥३२॥ इति द्वितीयं ब्राह्मणम्॥

॥ इति तृतीयोऽध्यायः ॥

universe. Let not anybody else than the Adhvaryu sing (these *Sāmans*). If any one else is to sing, these bricks will be misplaced (wrongly built). (Second Brāhmaṇa Ends.)

**( Chapter Three Ends.)**

# चतुर्थोऽध्यायः

## प्रथमं ब्राह्मणम्

उपवसथीये[1]ऽहन्प्रातरुदित आदित्ये वाचं विसृजते वाचं विसृज्य पञ्चगृहीतमाज्यं गृह्णीते तत्र पञ्च हिरण्यशकलान् प्रास्यत्यथैतत्त्रयꣳ समासिक्तं भवति दधि मधु घृतं पात्र्यां वा स्थाल्यां वोरुबिल्यां तदुपरिष्टाद्दर्भमुष्टिं निदधाति॥१॥

अथाग्निमारोहति नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिष इत्यत्रैष सर्वोऽग्निः सꣳस्कृतः स एषोऽत्र तस्मा अलं यद्धिꣳस्याद्यं जिहिꣳसिषेद्यमु वा एष हिनस्ति हरसा वैनꣳ शोचिषा वार्चिषा वा हिनस्ति तथो हैनमेष एतैर्न हिनस्त्यन्याꣳस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भवेति यथैव यजुस्तथा बन्धुः॥२॥

आरुह्याग्निꣳ स्वयमातृण्णां व्याघारयत्याज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः स्वयमातृण्णां व्याघारयति प्राणः स्वयमातृण्णां प्राणे तदन्नं दधाति॥३॥

यद्वेव स्वयमातृण्णां व्याघारयत्युत्तरवेदिर्हैषाग्नेरथ याममूं पूर्वां व्याघारयत्यध्वरस्य साथ हैषाग्नेस्तामेतद्व्याघारयति पश्यꣳ स्तत्र हिरण्यं व्याघारयति प्रत्यक्षं वै तद्यत्पश्यति प्रत्यक्षꣳ सोत्तरवेदिः प्रास्ता एवेह भवन्ति परोक्षं वै तद्यत्प्रास्ताः परोक्षमियमुत्तरवेदिः स्वाहाकारेण तां

१. उपवसथ्ये My , V2

## Chapter Four

### BRĀHMAṆA I

**1.** On the day of preparation, early morning when the sun has risen, he breaks his silence. After breaking silence, takes five ladles-full of *ghee* and drops five gold pieces into it. Then, these three things — curd, honey and *ghee*, he mixes in a vessel or in the jar with a wide mouth and places a fistful of *darbha* on it.

**2.** He then climbs over the *Agni*-altar (saying), "I pay homage to your heat, to your glow and I bow to your flames" — here the whole *Agni*-altar is fashioned. He is now capable of injuring whomsoever he might wish to injure. Whomsoever he injures, he injures with his heat, with his glow or with his flames. Thus (by praying) he does not injure him with them. (He says) "Let the arrows burn others; to us you be bright and propitious" — as the text, so the meaning.

**3.** After climbing on the altar he makes offering of *ghee* taken, five ladles-full, on the naturally perforated brick. Its significance, is already told. He offers on the naturally perforated one because *Svayamātṛṇṇā* is *prāṇa* and thereby he places that food into the *prāṇa*.

**4.** And as to why he offers on the *Svayamātṛṇṇā* — this is the high altar of Agni. On the earlier occassion, the libation which he makes is of the *Soma* sacrifce, but this one belongs to the fire-altar. While looking at the gold there, he makes the offering. For, what one sees is clearly visible and that high-altar is clearly visible. Here now the gold pieces are deposited on the *ghee* and what is deposited (in something) is invisible and this *uttara-vedī* (*svayamātṛṇṇā* brick) is also indistinct. In the former case he makes the offering on that (*uttaravedī*) with *svāhākāra* (uttering the word *svāhā*) because *svāhākāra* is clearly visible and that *uttaravedī* is distinctly visible. Here (he offers on the brick) with *vaṭkāra* (uttering the word *vaṭ*) for, that *vaṭkāra* is indistinct since this *uttaravedi* (*Svayamātṛṇṇā*) is indistinct. Here too with *ghee* (they offer) — for, at the *uttaravedī* they offer with *ghee.* With five ladles-full because at the *uttaravedī* they offer with five ladle-full of *ghee.* By turn he makes the offerings because they make the offering at the *uttaravedī* by turns. (Here the difference is — *vyāghāra* on the *uttaravedī* and the

व्याघारयति प्रत्यक्षं वै तद्यत्स्वाहाकारः प्रत्यक्षꣳ सोत्तरवेदिर्वेट्कारेणेमां परोक्षं वै तद्यद्वेट्कारः परोक्षमियमुत्तरवेदिराज्येनाज्येन ह्युत्तरवेदिं व्याघारयन्ति पञ्चगृहीतेन पञ्चगृहीतेन ह्युत्तरवेदिं व्याघारयन्ति व्यतिहारं व्यतिहारꣳ ह्युत्तरवेदिं व्याघारयन्ति॥४॥

नृषदे वेलिति प्राणो वै नृषन्मनुष्या नरस्तद्योऽयं मनुष्येषु प्राणोऽग्निस्तमेतत्प्रीणात्यप्सुषदे वेलिति योऽप्स्वग्निस्तमेतत्प्रीणाति बर्हिषदे वेलिति य ओषधिष्वग्निस्तमेतत्प्रीणाति वनसदे वेलिति यो वनस्पतिष्वग्निस्तमेतत्प्रीणाति स्वर्विदे वेलित्ययमग्निः स्वर्विदिममेवैतदग्निं प्रीणाति यद्वेवाह नृषदेवेडप्सुषदे वेलित्यस्यैवैतान्यग्नेर्नामानि तान्येतत्प्रीणाति तानि हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यतेऽथो एतानेवैतदग्नीनस्मिन्नग्नौ नामग्राहं दधाति पञ्चैता आहुतीर्जुहोति पञ्चचितिकोऽग्निः पञ्चर्तवः संवत्सरः संवत्सरोऽग्निर्यावा-नग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति॥५॥

अथैनꣳ समुक्षति दध्ना मधुना घृतेन जायत एष एतद्यच्चीयते स एष सर्वस्मा अन्नाय जायते सर्वम्वेतदन्नं यद्दधि मधु घृतꣳ सर्वेणैवैनमेतदन्नेन प्रीणाति सर्वतः समुक्षति सर्वत एवैनमेतत्सर्वेणान्नेन प्रीणाति॥६॥

यद्वेवैनꣳ समुक्षत्यत्रैष सर्वोऽग्निः संꣳस्कृतस्तस्मिन्देवा एतद्रूपमुत्तममदधुस्तथैवास्मिन्नयमेतद्रू-पमुत्तमं दधात्यन्नं वै रूपमेतदु परममन्नं यद्दधि मधु घृतं तद्यदेव परमꣳ रूपं तदस्मिन्नेतदुत्तमं दधाति सर्वतः समुक्षत्यपि बाह्येन परिश्रितः सर्वत एवास्मिन्नेतद्रूपमुत्तमं दधाति दर्भैस्ते हि शुद्धा मेध्या अग्रैरग्रꣳ हि देवानाम्॥७॥

यद्वेवैनꣳ समुक्षत्येतद्वै यत्रैतं प्राणा ऋषयोऽग्रेऽग्निꣳ समस्कुर्वꣳस्तदस्मिन्नदोऽमुं पुरस्ता-द्भागमकुर्वतादः सजूरब्दीयमथास्मिन्नेतꣳ सञ्चित उपरिष्टाद्भागमकुर्वत तद्यत्समुक्षति य

*svayamātṛṇṇā* are confined to *svāhākāra* vs *vaṭkāra* and looking at the gold and not looking at the gold. In other aspects this *svayamātṛṇṇā* is on a par with *uttaravedī*).

**5.** He offers the libation (saying), "*Vaṭ* to the one seated on man" *niṣad* (seated on man) is doubtless the *prāṇa.* Men mean human beings. That *prāṇa,* the Agni (fire) which is in human beings, he gratifies. "*Vaṭ* to the one seated on water"— thereby he propitiates the fire which is on the waters. "*Vaṭ* to the one seated on grass seat (*barhiṣad*)" — thereby he propitiates that fire which is on the plants. "*Vaṭ* to the forest-seated" — thereby he pleases the Agni which is on the trees. "*Vaṭ* to the one who wins the heaven" — Svarvid (winner of heaven) is Agni. This Agni the winner of heavens, he gratifies by that. What he said "*Niṣade Vaṭ*" and "*Apsusada Vaṭ*" these are the names of this Agni. He thus propitiates these names. He converts those names into deities by his oblation. For whatever deity the oblation is prepared, that deity (it becomes) and not that deity for whom it is not prepared. So when he calls them by their names, he is placing those names converted into Agni on this *Agni*-altar. He makes fire offerings (in this context), for *Agni*-altar has five layers, there are five seasons for a year and *Agni*-altar is the year; as great as Agni is, as great as is his size, with so much food he thus pleases him.

**6.** He then sprinkles him (*Agni*-altar) with curd, honey and *ghee.* This (altar) which is being built up, is being born and he is born for all kinds of food. Curd, honey and ghee (the trio) constitute all kinds of food. Therefore, he gratifies him with all kinds of food. He sprinkles him all over. So he gratifies him everywhere with all kinds of food.

**7.** And again why he sprinkles him (with curd, honey and *ghee*) — here this entire *Agni*-altar is fashioned. Unto him, the gods bestowed this highest form (final shape). In the like manner, this one (Yajamāna) bestows the highest form unto him. Food means form and these here; curd, honey and ghee are the highest type of food. So that which is the highest form, that final form he gives to him (*Agni*-altar). He sprinkles all over even outside the enclosing stones. (He sprinkles) with *darbha* grass, for *darbhas* are pure and fit for sacrifice. With the tips of the *darbhas* (he sprinkles) because the tips belong to gods.

**8.** Again, as to why he sprinkles him — this is where the *prāṇas,* the *ṛṣis* at first fashioned this Agni; they made that *Sajūrabdīya* (obltation by that name) as a special fore-share and after he had been built up, they made

एवास्मिꣳस्ते प्राणा ऋषयः सञ्चित उपरिष्टाद्भागमकुर्वत तानेवैतत्प्रीणाति दध्ना मधुना घृतेन तस्योक्तो बन्धुः॥८॥

ये देवा देवानां यज्ञिया यज्ञियानामिति देवा ह्येते देवानां यज्ञिया उ यज्ञियानाꣳ संवत्सरीणमुप भागमासत इति संवत्सरीणꣳ ह्येत एतं भागमुपासतेऽहुतादो हविषो यज्ञे अस्मिन्नित्यहुतादो हि प्राणाः स्वयं पिबन्तु मधुनो घृतस्येति स्वयमस्य पिबन्तु मधुनश्च घृतस्य चेत्येतत्॥९॥

ये देवा देवेष्वधि देवत्वमायन्निति देवा ह्येते देवेष्वधि देवत्वमायन्ये ब्रह्मणः पुर एतारो अस्येत्ययमग्निर्ब्रह्म तस्यैतै पुर एतारो येभ्यो न ऋते पवते धाम किं चनेति न हि प्राणेभ्य ऋते पवते धाम किं चन न ते दिवो न पृथिव्या अधि स्नुष्विति नैव ते दिवि न पृथिव्यां यदेव प्राणभृत्तस्मिꣳस्त इत्येतदृद्भ्याꣳ समुक्षति द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समुक्षति॥१०॥

अथ प्रत्यवरोहति प्राणदा अपानदा इति सर्वे हैते प्राणा योऽयमग्निश्चितः स यदेतामत्रात्मनः परिदां न वदेतात्र हैवास्यैष प्राणान्वृञ्जीताथ यदेनामत्रात्मनः परिदां वदते तथो हास्यैष प्राणान्न वृङ्क्ते प्राणदा अपानदा व्यानदा वर्चोदा वरिवोदा इत्येतद्दामेऽसीत्येवैतदाहास्याꣳस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भवेति यथैव यजुस्तथा बन्धुः॥११॥

प्रत्येत्य प्रवर्ग्योपसद्भ्यां प्रचरति प्रवर्ग्योपसद्भ्यां प्रचर्याथास्मै व्रतं वार्धव्रतं वा प्रयच्छत्यथ प्रवर्ग्योपसद्भ्यामथ प्रवर्ग्यमुत्सादयत्याप्त्वा तं कामं यस्मै कामायैनं प्रवृणक्ति ॥१२॥

this sprinkling as his after-share. Thus on sprinkling him, he gratifies those *ṛṣis*, the *prāṇas* who made that after-share. He is gratifying them with curd, honey and *ghee*. Its significance has been already explained.

**9.** (He sprinkles saying) "The gods of the gods, the worshipable of the worshipables" — for, they (the *prāṇas*) are indeed the gods among gods and worshipable among worshipables. "They go close to the year-long share" — for they indeed come close to this year-long share. "Those who do not eat what is offered as oblations in sacrifice" — for, the *prāṇas* do not partake in the oblations. "May they on their own, drink of the honey and the *ghee*" — (meaning) they should themselves consume this honey and *ghee*.

**10.** "The gods who attained super-godhood over the gods" — for, these gods have indeed attained super-divinity over the gods. "Who are the fore-runners of this Brahma" — this Brahman is *Agni*-altar and they are his fore-runners. "Without whom no home becomes purified" — for, without *prāṇa* nobody becomes purified. "They are neither on the back of the earth nor on the back of the sky" — i.e., whatever is breathing, in them they are present. With two verses he sprinkles, for, the Yajamāna is two-footed and Yajamāna is the *Agni*-altar; as great as Agni is, as great as is his size, with so much he thus sprinkles.

**11.** He then descends (from the altar) (saying), "Those who give *prāṇa*, those who give *apāna*" — for the *Agni*-altar that is being built is all these breathings. If he fails to utter these statements of (self-surrender), he (Agni) would confiscate his *prāṇas*. Now by uttering these words of surrender, that *Agni*-altar does not confiscate his vital airs. (He says) "Those who give *prāṇa*, those who give *apāna*, those who give *vyāna*, those who give lustre, those who give dwelling space" — thereby he says "You are the giver of these to me." "Let your arrows burn others than us; unto us, you be luminous and merciful" — as the text, so the meaning.

**12.** After returning, he proceeds with the *Pravargya* and the *Upasad* performances. After performing the *Pravargya* and *Upasad*, he gives to the Yajamāna, the food (allowed) for fast or the part of food (allowed) for fast. He then proceeds with the *Pravargya* and *Upasad* (for the afternoon) and having gained that objective for which he mounts the *Pravargya* vessel on the fire, he removes the *Pravargya* vessel.

तं वै परिष्यंन्द उत्सादयेत्तप्तो वा एष शुशुचानो भवति तं यदस्यामुत्सादयेदिमामस्य शुगृच्छेद्यदप्सूत्सादयेदपोऽस्य शुगृच्छेदथ यत्परिष्यन्द उत्सादयति तथो ह नैवापो हिनस्ति नेमां यदहाप्सु न प्रास्यति तेनापो न हिनस्त्यथ यत्समन्तमापः परियन्ति शान्तिर्वा आपस्तेनो इमां न हिनस्ति तस्मात्परिष्यन्द उत्सादयेत्॥१३॥

अग्नौ त्वेवोत्सादयेदिमे वै लोका एषोऽग्निरापः परिश्रितस्तं यदग्ना उत्सादयति तदेवैनं परिष्यन्द उत्सादयति॥१४॥

यद्वेवाग्ना उत्सादयतीमे वै लोका एषोऽग्निरग्निर्वायुरादित्यस्तदेते प्रवर्ग्याः स यदन्यत्राग्नेरुत्सादयेदेताꣳस्तद्देवान्बहिर्धैभ्यो लोकेभ्यो दध्यादथ यदग्ना उत्सादयत्येतानेवैतद्देवानेषु लोकेषु दधाति॥१५॥

यद्वेवाग्ना उत्सादयति शिर एतद्यज्ञस्य यत्प्रवर्ग्य आत्मायमग्निश्चितः स यदन्यत्राग्नेरुत्सादयेद्बहिर्धास्माच्छिरो दध्यादथ यदग्ना उत्सादयत्यात्मानमेवास्यैतत्सꣳस्कृत्य शिरः प्रतिदधाति स्वयमातृण्णया सꣳस्पृष्टं प्रथमं प्रवर्ग्यमुत्सादयति प्राणः स्वयमातृण्णा शिरः प्रवर्ग्य आत्मायमग्निश्चितः शिरश्च तदात्मानं च प्राणेन संतनोति संदधात्युत्साद्य प्रवर्ग्यं यथा तस्योत्सादनम्॥१६॥

प्रत्येत्याग्निं प्रहरिष्यन्नाहुतीश्च जुहोति समिधश्चादधात्येतद्वा एनं देवा एष्यन्तं पुरस्तादन्नेनाप्रीणन्नाहुतिभिश्च समिद्भिश्च तथैवैनमयमेतदेष्यन्तं पुरस्तादन्नेन प्रीणात्याहुतिभिश्च समिद्भिश्च स वै पञ्चगृहीतं गृह्णीते तस्योक्तो बन्धुरथ षोडशगृह्णीतं गृहीते षोळशकलः प्रजापतिः प्रजापतिरग्निरात्मसंमितेनैवैनमेतदन्नेन प्रीणाति यदु वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति

**13.** He should remove it (*Pravargya* vessel) to a place surrounded by water. Because, while being heated, that vessel has undergone pain and were he to place it on (dry) earth, that pain would enter this earth. Were he to it place in water, that pain would pass on to the water. When he transfers it to a place surrounded by water, then it does not cause harm to the earth or to the water. In that process, water goes all round it. Water being a soothing agent, it does not harm this earth. Let him therefore transfer it to a place surrounded by waters.

**14.** Let him (better) place it on the fire-altar itself, for, that altar is these worlds and the *pariśrits* or enclosing stones are the waters. So when he places it on the fire-altar, he (in effect) places it at a spot surrounded by waters.

**15.** And again why he transfers it to the *Agni*-altar is this. This *Agni*-altar is these worlds. *Pravargya* is Agni, Vāyu and Āditya. If he were to transfer to elsewhere than the *Agni*-altar, he would be keeping those gods outside these worlds. By transferring it to the altar, he places these gods in these worlds themselves.

**16.** Again why he transfers it to the altar — this *Pravargya* vessel is, doubtless, the head of the sacrifice. This altar built up is the body. If he were to place it elsewhere than the altar, he would be fixing the head outside (of the body). By placing it on the altar, he completes the body by restoring its head. The first *Pravargya*, he places near the naturally perforated brick; *svayamātṛṇṇā* is *prāṇa* (vital air) and the *Pravargya* is the head and this altar that is built is the body. Thereby he links that head and the body by means of vital air and connects them. Thus having removed the *Pravargya* (from the oven) according to the prescribed procedure.

**17.** And after coming back (to the *Gārhapatya*), he offers oblations and places *samidhās*, with a view to carry forward the fire. This is how the gods, when the fire was about to be carried forward (to the altar) first gratified him with food (in the form of ) oblations and *samidhās*. In same manner, this one (Yajamāna) when the fire was about to be carried forward, gratifies him with food in the form of oblations and *samidhās*. He takes five ladle-full of *ghee*; the purpose of it has been explained. Then he takes *ghee* sixteen ladle-fulls; for, Prajāpati has sixteen *kalās* (units) and Prajāpati is Agni.

तद्यत्कनीयो न तदवति समान्याꣳ स्रुचि गृह्णीते समानो हि स यमेतत्प्रीणाति वैश्वकर्मणाभ्यां जुहोति विश्वकर्माऽयमग्निस्तमेवैतत्प्रीणाति तिस्र आहुतीर्जुहोति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति॥१७॥

अथ समिध आदधाति यथा तर्पयित्वा परिवेविष्यात्तादृक्तदौदुम्बर्यो भवन्त्यूर्ग्वै रस उदुम्बर ऊर्जैवैनमेतद्रसेन प्रीणात्यार्द्रा भवन्त्येतद्वै वनस्पतीनामनार्तं जीवं यदार्द्रं तद्यदेव वनस्पतीनामनार्तं जीवं तेनैनमेतत्प्रीणाति घृतेन्युत्ता भवन्त्याग्नेयं वै घृतꣳ स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति सर्वाꣳ रात्रिं वसन्ति तत्र हि ता रसेन संपद्यन्ते तिस्रः समिध आदधाति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति॥१८॥

यद्वेवैता आहुतीर्जुहोत्येतद्वा एनं तं देवा एष्यन्तं पुरस्तादन्नेन समस्कुर्वन्नेताभिराहुतिभिस्तथैवैनमयमेतदेष्यन्तं पुरस्तादन्नेन सꣳस्करोत्येताभिराहुतिभिः स वै पञ्चगृहीतं गृह्णीते पञ्चधा विहितो वा अयꣳ शीर्षन्प्राणो मनो वाक्प्राणश्चक्षुः श्रोत्रमेतमेवास्मिन्नेतत्पञ्चधा विहितꣳ शीर्षं प्राणं दधात्यग्निस्तिग्मेन शोचिषेति तिग्मवत्या शिर एवास्यैतया सꣳश्यति तिग्मताया अथ षोलशगृहीतं गृह्णीतऽष्टौ प्राणा अष्टावङ्गान्येतामभि संपदꣳ समान्याꣳ स्रुचि गृह्णीते समाने ह्येवात्मन्नङ्गानि च प्राणाश्च भवन्ति नाना जुहोत्यङ्गेभ्यश्च तत्प्राणेभ्यश्च विधृतिं करोति वैश्वकर्मणाभ्यां जुहोति

Thereby he gratifies him with food, proportionate to his body. Food that is proportionate to the body, goes to protect it (body) and it does not harm. That (food) which is in excess, harms and that which is less, fails to protect. He takes the oblations in the same *sruk*, because it is the same Agni whom he is gratifying. He offers with two *mantras* pertaining to Viśvakarma. Because this Agni is Viśvakarma and it is him, he thus gratifies. He offers three oblations, for, Agni is threefold; as great as Agni is, as great as is his size, with so much of food, he thus gratifies him.

**18.** He then places the *samidhās*. Just as after gratifying somebody, one would attend upon him, it is like that. Those *samidhās* are of the Udumbara wood. Udumbara is food and sap. Thereby he gratifies him with food and essence. They are fresh (*samidhās*); for, that part of a tree which is fresh is the unimpaired living part. So thus that which is the unimpaired and living part of the tree, with that he now gratifies him. They are soaked in *ghee*, for, *ghee* belongs to Agni. Thereby he gratifies him (fire) with his own thing, with his own essence. They (*samidhās*) remain in it (*ghee*) for the whole night; whence they get enriched with essence. He places three *samidhās*, for, Agni is threefold; as great as Agni is, as great as is his size, by so much food he thus gratifies him.

**19.** And as to why he offers these oblations— when that Agni was about to go forward, the gods equipped him beforehand by means of food, by means of these oblations. In the same way, this one (Yajamāna) equips him, who is about to go forward, beforehand with food, with these oblations. He takes five ladles-full, because the *prāṇa* is divided fivefold in the head; namely mind, speech, breathing, eye and ear. Thereby he puts that fivefold divided *prāṇas* into the head. (He says) "Agni, with his sharp flame" — —with this *mantra* containing the word "sharp", he sharpens his head (flame) for attaining sharpness. Then he takes sixteen ladles-full of *ghee* (on the *sruk*), eight vital airs and eight limbs — these account for (sixteen) count. He collects it in the same *sruk*; because the vital airs and limbs are in the same body. He makes the offering separately and thus distinguishes between the limbs and the vital airs. He offers with the two *mantras* related to Viśvakarma; for, the *Agni*-altar is Viśvakarma and he is being fashioned. He offers three oblations; for, Agni is threefold; as great as Agni is, as great as is his size, by so much food he is gratified. With seventeen *Ṛk* stanzas (he fashions it) for, Prajāpati is seventeenfold and Prajāpati is Agni; as great as

विश्वकर्मायमग्निस्तमेवैतत्सꣳस्करोति तिस्र आहुतीर्जुहोति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन सꣳस्करोति सप्तदशभिर्ऋग्भिः सप्तदशः प्रजापतिः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्सꣳस्करोत्येकविꣳशतिगृहीतेन द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविꣳश एतामभि संपदम्॥१९॥

यद्वेवैताः समिध आदधात्येतद्वा एनं देवाः सर्वं कृत्स्नꣳ सꣳस्कृत्याथैनमेतेनान्नेनाप्रीणन्नेताभिः समिद्भिस्तथैवैनमयमेतत्सर्वं कृत्स्नꣳ सꣳस्कृत्याथैनमेतेनान्नेन प्रीणात्येताभिः समिद्भिरौदुम्बर्यो भवन्त्यार्द्रा घृते न्युत्ता सर्वाꣳ रात्रिं वसन्ति तस्योक्तो बन्धुरुदेनमुत्तरां नयेन्द्रेमं प्रतरां नय यस्य कुर्मो गृहे हविरिति यथैव यजुस्तथा बन्धुस्तिस्रः समिध आदधाति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति तिस्र आहुतीर्जुहोति तत्षट् तस्योक्तो बन्धुः॥२०॥ इति प्रथमं ब्राह्मणम्॥

## द्वितीयं ब्राह्मणम्

अथातः संप्रेष्यत्युद्यंच्छेध्ममुपयच्छोपयमनीरग्नये प्रह्रियमाणायानुब्रूह्यग्नीदेकस्फ्ययानूदेहि ब्रह्मन्नप्रतिरथं जपते[1] तद्वै देवानुपप्रैष्यत एतं यज्ञं तꣳस्यमानान्दक्षिणतोऽसुरा रक्षाꣳसि नाष्ट्रा व्यजिघाꣳसन्न[2] यक्ष्यध्वे न[3] यज्ञं तꣳस्यध्व इति॥१॥

ते देवा इन्द्रमब्रुवꣳस्त्वं वै नः श्रेष्ठो बलिष्ठो वीर्यवत्तमोऽसि त्वमिमानि रक्षाꣳसि प्रतियतस्वेति तस्य वै मे ब्रह्म द्वितीयमस्त्विति तथेति तस्मै वै बृहस्पतिं द्वितीयमकुर्वन्ब्रह्म वै बृहस्पतिस्त इन्द्रेण चैव बृहस्पतिना च दक्षिणतोऽसुरान्रक्षाꣳसि नाष्ट्रा अपहत्याभयेऽनाष्ट्रा एतं यज्ञमतन्वत॥२॥

तद्वा एतत्क्रियते यद्देवा अकुर्वन्निदं नु तानि रक्षाꣳसि देवैरेवापहतानि यत्त्वेतत्करोति यद्देवा

१. जपत्येत द्वै My,H,V2
२. अजिघाꣳसन् V2,H,My
३. ना TE

Agni is, as great as is his size, by so much he is gratified. He offers oblations of *ghee* taken twenty-one ladles-full for, there are twelve months, five seasons, these three worlds, and yonder sun as the twenty-first. This is the symbolic significance of that count.

**20.** As to why he places the *samidhās* — the gods having fashioned and completed him (*Agni*-altar) gratified him with this food; with these *samidhās*. Similarly this one (Yajamāna) having fashioned and completed him, gratifies him with this food; with these *samidhās*. They (*samidhās*) are of Udumbara wood, fresh and they remain the whole night soaked in *ghee*. The significance of this has been explained. "O Agni ! lead him upwards; O Indra ! lead him forward, in whose house we make offerings" — as the text, so the meaning. Three *samidhās* he places; for, Agni is threefold: as great as Agni is, as great as is his size; with so much food he thus gratifies him. Three oblations he offer that makes six (with the three *samidhās*). The significance of this has been explained. (First Brāhmaṇa Ends.)

### BRĀHMAṆA II

**1.** Then (the Adhvaryu) issues the following orders (to Prati-prasthāta). "Take up the log; hold up the under layer". (To the Hotā) "Recite for Agni when he is taken forward." (To Agnīdh) "Agnīdh, follow the single wooden spear." (To Brahman) "Brahman, utter the *Apṛtiratha* hymn." That is because at that time, when the gods were about to organise this sacrifice, the terrible Asura–Rākṣasas attacked them from the south saying, "You shall not perform sacrifice; you shall not prepare for the sacrifice."

**2.** These gods said to Indra, "You are the supreme most, the mightiest and the strongest of us. You please check those terrible -Rākṣasas." (Indra said) "Let the Brahman be my associate." (They said) "So it be." They made Bṛhaspati second in his command; for, Bṛhaspati is Brahman. Thus by Bṛhaspati and Indra, they drove away the terrible Asura-Rākṣasas from the southern side and they organised this sacrifice in place, free from fear and evil.

**3.** Now this one (Yajamāna) does what the gods did. Actually these -Rākṣasas were driven away by gods themselves. The purpose of his doing the same now is because he thinks "Let me do what the gods did." There-

अकुर्वꣳस्तत्करवाणीत्यथो इन्द्रेण चैवैतद्बृहस्पतिना च दक्षिणतोऽसुरान् रक्षाꣳसि नाष्ट्रा अपहत्याभयेऽनाष्ट्र एतं यज्ञं तनुते स यस्य इन्द्रः एष सोऽप्रतिरथोऽथ यस्य बृहस्पतिः स ब्रह्मा तद्यद्ब्रह्माप्रतिरथं जपति॥३॥

आशुश्शिशानो वृषभो न भीम इत्यैन्द्रयोऽभिरूपा द्वादश भवन्ति द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानाग्निर्यावत्यस्य मात्रा तावतैवैतद्दक्षिणतोऽसुरान् रक्षाꣳसि नाष्ट्रा अपहन्ति त्रिष्टुब्भिर्वज्रो वै त्रिष्टुब्वज्रेणैवैतद्दक्षिणतोऽसुरान् रक्षाꣳसि नाष्ट्रा अपहन्ति ता द्वाविꣳशतिर्गायत्र्यः संपद्यन्ते तदाग्नेय्यो भवन्त्यग्निकर्म हि॥४॥

अथैनमुद्यच्छत्युदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिरिति तस्योक्तो बन्धुरथाभिप्रयन्ति पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरिति देवाश्चासुराश्चोभये प्राजापत्या दिक्ष्वस्पर्धन्त ते देवा असुराणां दिशोऽवृञ्जत तथैवैतद्यजमानो द्विषतो भ्रातृव्यस्य दिशो वृङ्क्ते दैवीरिति तदेना दैवीः कुरुते यज्ञमवन्तु देवीरिति यज्ञमिममवन्तु देवीरित्येतदपामतिं दुर्मतिं बाधमाना इत्यशनाया वा अमतिरशनायामपबाधमाना इत्येतद्रायस्पोषे यज्ञपतिमाभजन्तीरिति रय्यां च पोषे च यज्ञपतिमाभजन्तीरित्येतद्रायस्पोषे अधियज्ञो अस्थादिति रय्यां च पोषे चाधि यज्ञोऽस्थादित्येतत्॥५॥

समिद्धे अग्ना अधि मामहान इति यजमानो वै मामहान उक्थपत्र इत्युक्थानि ह्येतस्य[४] पत्राणीड्य इति यज्ञिय इत्येतद्बभीत इति धारित इत्येतत्तप्तं घर्मं परिगृह्य[५] यजन्तेति तप्तꣳ ह्येतं घर्मं परिगृह्य[६] यजन्तोर्जा यद्यज्ञमयजन्त देवा इत्यूर्जा ह्येतं यज्ञमयजन्त देवाः॥६॥

४. हेतस्य TE
५. परिगृह्य My
६. परिगृह्य My

fore with Indra and Bṛhaspati, having driven away the terrible Asura–Rākṣasas from the south, he arranges this sacrifice(in a place) free from fear and evil. He who is Indra is indeed unchallengable (*Apratiratha*) and he who is Bṛhaspati is Brahman and Brahman chants the *Apratiratha* hymns.

**4.** (The Brahman says) "This fast-moving Indra, sharpening (his weapon) like a fierce bull" — beginning from this (Āśuśśiśāna)) there are twelve hymns becoming of Indra; for, there are twelve months for a year and Agni is the year. As great as Agni is, as great as is his size, by so much he drives the terrible Asura-Rākṣasas from the south. (They are) in Triṣṭubh metre and Triṣṭubh is the thunder-bolt. Therefore he strikes at the terrible Asura-Rākṣasas in the south by means of thunder-bolt. They are total twenty-two Gāyatrīs (Trṣṭubh has 44 syllables each and twelve Triṣṭubhs come to 528 syllables divided by 24 which gives 22 Gāyatrīs). These chants belong to Agni because it is a ritual of Agni.

**5.** He then lifts him (in the form of a burning log) saying, "Let the Viśvedevās bear you upwards, O Agni ! by means of their thoughts." This has already been explained. They then go round to the front. "May the five divine directions protect the sacrifice." He says, "*Daivīḥ*" (divine) because the gods and Asuras, both offsprings of Prajāpati, quarreled over the directions. These gods captured the regions of the Asuras. In same manner, this Yajamāna captures the regions from his hateful enemies. By saying "Divine", he renders these (directions) divine. "May the goddesses protect the sacrifice." (Meaning) "Let that which is divine, protect this sacrifice." "Keeping off hunger and ill-will." (Meaning) "Not longing for feed or not afflicted by hunger." "Gratifying to the lord of the sacrifice a share in wealth and in affluence." (Meaning) "Bestowing on the lord of the sacrifice a share in wealth and in affluence." "May the sacrifice be established on wealth and plenty." (Meaning) "May the sacrifice be founded on wealth and affluence."

**6.** "Assuming greatness in the kindled fire" — the Yajamāna is the one who assumes greatness. "The *Uktha* hymn has the wings" — for, the *Uktha* are his wings. "Praise-worthy" (meaning) deserving to be praised. "*Gṛbhīta*" means held. "While they sacrifice, encircling the heated Gharma" — this Gharma (the *Pravargya* vessel) is heated all around when they sacrificed. "With food, the gods offered sacrifi ." — indeed the gods offered this sacrifice with food.

दैव्याय धर्त्रे जोष्ट्र इति दैवो[७] ह्येष धर्ता जोष इतृतमो देवश्रीः श्रीमणाः शतपया इति देवश्रीर्ह्येष श्रीमणाः शतपयाः परिगृह्य देवा यज्ञमायन्निति परिगृह्य ह्येतं देवा यज्ञमायन्देवा देवेभ्यो अध्वर्यन्तो अस्थुरित्यध्वरो वै यज्ञो देवा देवेभ्यो यज्ञियन्तोऽस्थुरित्येतत्॥७॥

वीतꣳ हविः शमितꣳ शमिता यजध्या इतीष्टꣳ स्विष्टमित्येतत्तुरीयो यज्ञो यत्र हव्यमेतीत्यध्वर्युः पुरस्ताद्यजूꣳषि जपति होता पश्चादृचोऽन्वाह ब्रह्मा दक्षिणतोऽप्रतिरथं जपत्येष एव तुरीयो यज्ञस्ततो वाका आशिषो नो जुषन्तामिति ततो नो वाकाश्चाशिषश्च जुषन्तामित्येतत्॥८॥

सूर्यरश्मिर्हरिकेशः पुरस्तात्सविता ज्योतिरुदयां३अजस्रमित्यसौ वा आदित्य एषोऽग्निः स एष सूर्यरश्मिर्हरिकेशः पुरस्तात्सवितैतज्ज्योतिरुद्यच्छत्यजस्रं तस्य पूषा प्रसवे याति विद्वानिति पशवो वै पूषा त्व एतस्य प्रसवे प्रेरते संपश्यन्विश्वा भुवनानि गोपा इत्येष वा इदꣳ सर्वꣳ संपश्यत्येष उ एवास्य सर्वस्य भुवनस्य गोप्ता॥९॥

तद्वा अमुष्मादादित्यादर्वाच्यः पञ्चदिशस्ता एतद्देवा असुराणामवृञ्जताथो ता एवैतत्समारोहꣳस्ता उ एवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्तेऽथो ता एवैतत्समारोहत्यथो एतद्वा एताभिर्देवा आतः[८] संप्राप्नुवꣳस्तथैवाभिरयमेतदातः संप्राप्नोति॥१०॥

अथाश्मानं पृश्निमुपदधात्यसौ वा आदित्योऽश्मा पृश्निरमुमेवैतदादित्यमुपदधाति पृश्निर्भवति रश्मिभिर्हि मण्डलं पृश्नि तमन्तरेणाहवनीयं च गार्हपत्यं चोपदधात्ययं वै लोको गार्हपत्यो द्यौराहवनीय एतं तदिमौ लोकावन्तरेण दधाति तस्मादेष इमौ लोकावन्तरेण तपत्याग्नीध्रवेलायामन्तरिक्षं वा आग्नीध्रमेतं तदन्तरिक्षे दधाति तस्मादेषोऽन्तरिक्षायतनो व्यध्वे-

७. दैव्यो V2, My
८. अतः TE

**7.** "To the divine, the supporter and the protector" — because he is indeed the divine supporter and he protects the best. "He who approaches gods, the one well-disposed and of a hundred draughts" — he is indeed an approacher of gods, well-disposed and possessed of a hundred draughts. "Encircling him, the gods came near to the sacrifice" — or the gods drew near to the sacrifice encircling him (Agni). "The gods stood ready to perform Adhvara for the gods" — Adhvara means sacrifice and the gods engage themselves in sacrifice to the gods.

**8.** "The pleasing oblation slaughtered by the slaughterer to the sacrifice" — that is "pleasing" means "very much liked". "Where the fourth sacrifice goes to the offering" — thus the Adhvaryu on the east utters the *Yajus* formulas; then the Hotā recites the *Ṛk mantras* at the west and then the Brahman chants the *Apratiratha* hymn on the southern side. This is the fourth sacrifice which follows. "May the prayers, the benedictions favour us."

**9.** "The Savitā, the sun-rayed and golden-haired ever raises up the light in front" — this *Agni*-altar is doubtless, yonder sun and that sun-rayed and golden-haired Savitā in front ever raises that light. "At his bidding Puṣan, the wise moves." *Pūṣā* is indeed the cattle and he moves at the bidding of the sun. "Viewing all beings as their guardian"— for, he indeed views everything here as he is the protector of all this world.

**10.** Now the gods thereby (by means of these five *mantras*) captured from the Asuras, the five regions which are on this side of the yonder sun. Then they ascended these (regions). In like manner, this Yajamāna captures from his hateful enemy (the five directions) and then ascends them. Just as these gods with these (five *mantras*) reached this place, similarly this one (Yajamāna) with these, reaches this place.

**11.** He then places a stone with dots on it. This dotted stone is the yonder sun. Thus he places the yonder sun. It is dotted, for, by means of its rays its disc gets dotted. He places it in between the *Āhavanīya* and the *Gārhapatya.* This earth is the *Gārhapatya* and the sky is the *Āhavanīya.* Thus he lays it down between the two worlds. That is why, he (sun) burns between these two worlds. He places it on that side where the *Āgnīdhra* hearth is to be set up. *Āgnīdhra* is the aerial region and so he places him (sun) in

व्यध्वे ह्येष इतः स एष प्राणः प्राणमेवैतदात्मन्धत्ते तदेतदायुरायुरेवैतदात्मन्धत्ते तदेतदन्नमायुर्ह्येतदन्नमु वा आयुरश्मा भवति स्थिरो वा अश्मा स्थिरं तदायुः कुरुते पृश्निर्भवति पृश्नीव ह्यन्नम्॥११॥

स उपदधाति विमान एष दिवो मध्य आस्त इति विमानो ह्येष दिवो मध्य आस्त आपप्रिवान्रोदसी अन्तरिक्षमित्युद्यन्वा एष इमाँल्लोकानापूरयति स विश्वाचीरभिचष्टे घृताचीरिति स्रुचश्चैतद्वेदीश्चाहान्तरा पूर्वमपरं च केतुमित्यन्तरेमं च लोकममुं चेत्येतदथो यच्चेदमेतर्हि चीयते यच्चादः पूर्वमचीयतेति॥१२॥

उक्षा समुद्रो अरुणः सुपर्ण इत्युक्षा ह्येष समुद्रोऽरुणः सुपर्णः पूर्वस्य योनिं पितुराविवेशेति पूर्वस्य ह्येष एतं योनिं पितुराविशति मध्ये दिवो निहितः पृश्निरश्मेति मध्ये ह्येष दिवो निहितः पृश्निरश्मा विचक्रमे रजसस्पात्यन्ताविति विक्रममाणो वा एष एषां लोकानामन्तान्पाति द्वाभ्यामुपदधाति द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदुपदधाति त्रिष्टुब्भ्यां त्रैष्टुभो ह्येष न सादयत्यसन्नो ह्येष न सूददोहसाधिवदति प्राणो वै सूददोहाः प्राण एष किं प्राणे प्राणं दध्यामिति[९] तं निधाय यथा न नश्येत्॥१३॥

अथोपायन्तीन्द्रं विश्वा अवीवृधन्निति तस्योक्तो बन्धुर्देवहूर्यज्ञ आ च वक्षत्सुम्नहूर्यज्ञ आ च वक्षदिति देवहूश्चैव यज्ञः सुम्नहूश्च यक्षदग्निर्देवो देवां३आ च वक्षदिति यक्षच्चैवाग्निर्देवो देवाना च वहत्वित्येतद्वाजस्य मा प्रसव उद्ग्राभेणोदग्रभीत्। अधा सपत्नानिन्द्रो मे निग्राभेणाधरां ३

९. दध्यादिति My

the aerial region. Hence the sun is one with the *antarīkṣa* as his abode. Half way (between *Āhavanīya* and *Gārhapatya* he places it); for, that sun is half way from this earth. This stone is *prāṇa* and by placing it, he puts the vital air into the body. This is *āyu* (life-power) and thereby he puts the life-power into the body. It is food, since it is life-power. Because life-power is indeed food. It is a stone; for, a stone is firm and he thus makes the life-power firm. It is spotted; for food is of varied colours.

**12.** He places it (saying), "This one stays in the middle of the sky after measuring" — indeed that one (sun) keeps to the middle of the sky after measuring. "Filling up the two worlds and the aerial region" — even while rising, he fills up these three worlds (with light). "He notices the *Viśvācī* and the *Ghṛtācī*." These refer to the *sruks* (offering ladles and the *vedī*). "Between the front and back lights". (Meaning) Between this world and the yonder one or between that fire-altar which is being built here, that is, (*Āhavanīya*) and that which is already built here (*Gārhapatya*).

**13.** "The showering ocean, the ruddy bird" — for, he (the sun) is indeed a showering ocean and the ruddy bird. "He has entered the womb of his father in the east" — for, he indeed enters that seat of his father in the east (*Āhavanīya*). "The multi-coloured rock set-up in the middle of sky." For, that variegated stone is indeed, set up in the middle of the sky. "Has traversed and guards the two ends of the atmosphere" — for, while traversing, he guards the ends of these worlds. Thus with two verses, he sets it up, for, the Yajamāna is two-footed and the Yajamāna is *Agni*-altar. As great as Agni is, as great as is his size, with so much he thus sets him up. With (two) verses in Triṣṭubh metre, (he sets up); for, that one (sun) is of Triṣṭubh. He does not settle it; for, that one (sun) is himself not settled. Nor he chants the *Sūdadohasa* over it. The *Sūdadohasa* is the *prāṇa* and that (sun) himself is breath (*prāṇa*) and should anybody put *prāṇa* into *prāṇa* ? He having placed in such a way, that it is not lost.

**14.** They now approach (the fire-altar) saying, "All of them have developed Indra." Its meaning has been told. "Let the sacrifice summoning the gods, come forward; let the sacrifice invoking favours bring forward here (the gods)" — because the sacrifice is one that summons gods and brings favours. "Let Agni, the god, make offering and lead hither the gods" which means, "may Agni, the god, make the offering and also bring the gods

अकरिति यथैव यजुस्तथाबन्धुरुद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन्। अधा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्तामिति यथैव यजुस्तथा बन्धुः॥१४॥

तद्या अमुष्मादादित्यादूर्ध्वाश्चतस्रो दिशस्ता एतद्देवा असुराणामवृञ्जताथो ता एवैतत्समारोहꣳस्ता उ एवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्तेऽथो ता एवैतत्समारोहत्यथो एतद्वा एताभिर्देवा आतः संप्राप्नुवꣳस्तथैवाभिरयमेतदातः संप्राप्नोति॥१५॥

अथाग्निमारोहन्ति क्रमध्वमग्निना नाकमिति स्वर्गो वै लोको नाकः क्रमध्वमनेनाग्निनैतꣳ स्वर्गं लोकमित्येतदुख्यꣳ हस्तेषु बिभ्रत इत्युख्यꣳ ह्येत एतꣳ हस्तेषु बिभ्रति दिवस्पृष्ठꣳ स्वर्गत्वा मिश्रा देवेभिराध्वमिति दिवस्पृष्ठꣳ स्वर्गं लोकं गत्वा मिश्रा देवेभिराध्वमित्येतत्॥१६॥

प्राचीमनु प्रदिशं प्रेहि विद्वानिति प्राची वै दिगग्नेः स्वामनु प्रदिशं प्रेहि विद्वानित्येतदग्नेरग्ने पुरो अग्निर्भवेहेत्यस्य त्वमग्नेरग्ने पुरो अग्निर्भवेहेत्येतद्विश्वा आशा दीद्यानो विभाहीति सर्वा आशा दीप्यमानो विभाहीत्येतदूर्जं नो धेहि द्विपदे चतुष्पद इत्याशिषमाशास्ते॥१७॥

पृथिव्या अहमुदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहमिति गार्हपत्या द्ध्याग्नीद्ध्रीयमागच्छन्त्याग्नीद्ध्रीयादाहवनीयं दिवो नाकस्य पृष्ठात्स्वर्ज्योतिरगामहमिति दिवो नाकस्य पृष्ठात्स्वर्गं लोकममगामहमित्येतत्स्वर्यन्तो नापेक्षन्त आद्याꣳ रोहन्ति रोदसी इति न हैव तेऽपेक्षन्ते ये स्वर्गं लोकं यन्ति यज्ञं ये विश्वतोधारꣳ सुविद्वाꣳसो वितेनिर इत्येष एव यज्ञो विश्वतोधार एत उ एव सुविद्वाꣳसो य एतं वितन्वते॥१८॥

here." "The production of strength has charged me with enthusiasm and Indra has subdued my enemies by (his) enthusiam" — as the text, so its meaning. "May the gods enrich the Brahman with enthusiasm and subdual and may Indra and Agni throw to pieces my enemies." As the text, so the meaning.

**15.** By these (four verses) the gods captured from the Asuras, the four directions that are above the yonder sun and ascended them. In the same way, this Yajamāna captures them from the hateful enemy and ascends them. By means of these verses, the gods then reached that place and in the same way, this Yajamāna by means of these reaches that (place).

**16.** They then mount the fire-altar (saying), "With Agni, you all ascend the *nāka*" — *nāka* is indeed the heavenly world and it means "with this Agni, you ascend the heavenly world." "Holding the Ukhya in your hands" — for, the Ukhya (fire in the Ukhā) they carry in their hands. "Having reached the top of the sky, i.e., the heaven, you keep mingling with the gods." (meaning) "having gone to the back of the sky which is the heavenly world, you keep company with the gods."

**17.** "You advance to the eastern quarter, knowing" — the eastern quarter is indeed that of Agni. Thus (it means) "go to your own quarter, knowing." "You become the fore-fire (fore-runner) of Agni here", (meaning) "O Agni ! you go in advance of this fire (of the *citi*)" – "By your shining, illuminate all quarters" (which means) "shining as you are, illuminate all the regions." "You provide food to the two-footed and four-footed of ours" — thereby he asks for a boon.

**18.** "I ascended the aerial region from the cattle; I have ascended the sky from the aerial region" — for, they go from *Gārhapatya* to the *Āgnīdhrīya* and from the *Āgnīdhrīya*, they come to the *Āhavanīya*. "From the back of the sky, I have gone to the heavenly light" — (meaning) "I have gone to the heavenly world from the sky, the back of the firmament." "Those who proceed to the heaven do not look round, they ascend the two worlds" — for, those who ascend the heavens do not look round. "The well-learned, who performed the all-sustaining sacrifice" — for, this sacrifice is indeed all-sustaining (over-flowing all around) and those who perform it are, of course, very well-versed.

## तृतीयं ब्राह्मणम्

अथातो वाजप्रसवीयं जुहोत्यन्नं वै वाजोऽन्नप्रसवीयꣳ[1] हास्यैतदन्नमेवास्मा एतेन प्रसौत्येतद्वा एनं देवा एतेनान्नेन प्रीत्वैतैः कामैरभिषिच्यैतया वसोर्धारयाथैनमेतद्भूय एवाप्रीणꣳस्तथैवैनमयमेतदेतेनान्नेन प्रीत्वैतैः कामैरभिषिच्यैतया वसोर्धारयाथैनमेतद्भूय एव प्रीणाति॥१॥

यद्वेवैतद्वाजप्रसवीयं जुहोत्यभिषेक एवास्यैष एतद्वा एनं देवा एतेनान्नेन प्रीत्वैतैः कामैरभिषिच्यैतया वसोर्धारयाथैनमेतद्भूय एवाभ्यषिञ्चꣳस्तथैवैनमयमेतदेतेनान्नेन प्रीत्वैतैः कामैरभिषिच्यैतया वसोर्धारयाथैनमेतद्भूय एवाभिषिञ्चति॥२॥

सर्वौषधं भवति सर्वमेतदन्नं यत्सर्वौषधꣳ सर्वेणैवैनमेतदन्नेन प्रीणात्यथो सर्वेणैवैनमेतदन्नेनाभिषिञ्चति तेषामेकमन्नमुद्धरेत्तस्य नाश्नीयाद्यावज्जीवमौदुम्बरेण चमसेनौदुम्बरेण स्रुवेण तयोरुक्तो बन्धुश्चतुःस्रक्ती भवतश्चतस्रो वै दिशः सर्वाभ्य एवैनमेतद्दिग्भ्योऽन्नेन प्रीणात्यथो सर्वाभ्य एवैनमेतद्दिग्भ्योऽन्नेनाभिषिञ्चति॥३॥

यद्वेवैतद्वाजप्रसवीयं[2] जुहोत्येता ह देवताः सुता एतेन सवेन येनैतत्सोष्यमाणो भवति ता एवैतत्प्रीणाति ता अस्मा इष्टाः प्रीता एतꣳ सवमनुमान्यन्ते ताभिरनुमतः सूयते यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति न स यस्मै न तद्यदग्नौ जुहोति तदग्निमभिषिञ्चत्यथ यदेताभ्यो देवताभ्यो जुहोति तदु तान् देवान् प्रीणाति य एतस्य सवस्येशते॥४॥

अथ वा एतत्पार्थान्यभि[3] जुहोत्येतद्वै देवा अकामयन्तात्रैव सर्वैः सवैः सूयेमहीति तेऽत्रैव सर्वैः सवैरसूयन्त तथैवैतद्यजमानोऽत्रैव सर्वैः सवैः सूयते॥५॥

तद्यानि पार्थानि तानि राजसूयस्य वाजप्रसवीयं तद्यत्तानि जुहोति तद्राजसूयेनसूयतेऽथ यानि*

१. प्रसव्यꣳ My V2
२. प्रसव्यं My
३. पार्थान्यपि TE
*** From यानि to next यानि missing in TE**

**BRĀHMAṆA III**

**1.** Now he offers the *Vājaprasavīya* (consisting of fourteen oblations). *Vāja* means food and so it is *Anna-prasavīya* or productive of food for him. He thereby produces food for him (Agni). The gods, after satisfying him with that food and bathed him with those objects of desire by the *Vasordhārā*, now gratify him once again.

**2.** Now why he offers the *Vājaprasavīya* — this is purely the *abhiṣeka* (consecration) of Agni. Gods have satisfied him with that food and having bathed him with *Vasordhārā*, consecrated him once more with this (*Vājaprasavīya*) offering.

**3.** It consists of all herbs. That which is of all herbs is all food. Thus he gratifies him with all food and bathes him with all food. Let him set apart one type of food and not eat it throughout his life. It should be offered with a *camasa* made of Udumbara wood and with a *sruk*. Its significance has been told. They (the *camasa* and *sruk*) are to be four-cornered, for there are four-quarters. Thereby he gratifies him with this food from all quarters. Therefore he consecrates him with food from all quarters.

**4.** Again why he offers *Vājaprasavīya* — these are the very deities who have been consecrated by this same rite of consecration by which he is now going to be bathed. By this offering, they (deities) get pleased and approve of his consecration. So approved by them, he gets himself consecrated. He alone becomes eligible to be the king, whom other kings recognise for a kingdom; not the one who is not (so recognised). When he offers in the fire, he consecrates Agni. When he offers to these deities, he pleases those deities. Thus he gratifies those gods who control this *abhiṣeka.*

**5.** Here he offers these *Pārtha* oblations as well. Because the gods now desired, "Let us also be consecrated on this occasion with all the formalities thereof." They were here consecrated by all the formalities. Similarly, this Yajamāna gets consecrated by all the rites of consecration.

**6.** What are called *Pārthas* here are the same as the *Vājaprasavīyas* in the *Rājasūya*. By offering these *Pārtha* oblations, he gets consecrated by the *Rājasūya*. Out of the next fourteen oblations, the first seven are the

चतुर्दशोत्तराणि ततो यानि सप्तपूर्वाणि तानि वाजपेयस्य वाजप्रसवीयं[4] तद्यत्तानि जुहोति तद्वाजपेयेन सूयतेऽथ यानि सप्तौत्तराणि तान्यग्नेस्तद्यत्तानि जुहोति तदग्निसवेन सूयते॥६॥

स वै राजसूयस्य पूर्वाणि जुहोत्यथ वाजपेयस्य राजा वै राजसूयेनेष्ट्वा भवति सम्राड्वाजपेयेन राज्यमु वा अग्रेऽथ साम्राज्यं तस्माद्वाजपेयेनेष्ट्वा न राजसूयेन यजेत प्रत्यवरोहः स यथा सम्राट्सन् राजा स्यात्तादृक्तदग्नेरुत्तमानि जुहोति सर्वे हैते स वा यदग्निसवः सर्वꣳ हैतदग्निसवेन सुतो भवति राजा च सम्राट् च तस्मादग्नेरुत्तमानि जुहोति॥७॥

अथैनं कृष्णाजिनेभिषिञ्चति यज्ञो वै कृष्णाजिनं यज्ञ एवैनमेतदभिषिञ्चति लोमतश्छन्दाꣳसि वै लोमानि छन्दः स्वेवैनमेतदभिषिञ्चत्युत्तरतस्तस्योपरि बन्धुः प्राचीनग्रीवे तद्धि देवत्रा॥८॥

तꣳ हैके दक्षिणतोऽग्नेरभिषिञ्चन्ति दक्षिणतो वा अन्नस्योपचारस्तदेनमन्नस्यार्धादभिषिञ्चाम इति न तथा कुर्यादेषा वै दिक्पितॄणां क्षिप्रे हैतां दिशं प्रैति यं तथाभिषिञ्चति ॥९॥

आहवनीय उ हैकेऽभिषिञ्चन्ति स्वर्गो वै लोक आहवनीयस्तदेनꣳ स्वर्गे लोकेऽभिषिञ्चाम इति न तथा कुर्याद्देवो वाऽस्यैष आत्मा मानुषोऽयमनेन हास्य ते मर्त्येनात्मनैतं दैवमात्मानमनुप्रसजन्ति यं तथाभिषिञ्चन्ति॥१०॥

उत्तरत एवैनमभिषिञ्चेदेषा होभयेषां देवमनुष्याणां दिग्यदुदीची प्राची स्वायामेवैनमेतद्दिश्यायत्तं प्रतिष्ठितमभिषिञ्चति न वै स्व आयतने प्रतिष्ठितो रिष्यति॥११॥

४. प्रसव्यं My

*Vājaprasavīya* of the *Vājapeya* and by offering them, he gets consecrated by the *Vājapeya*. The last seven (out of the fourteen) belong to Agni and by offering them he gets consecrated by the *Agni-Sava* (consecration of Agni).

**7.** He first offers the seven *Vājaprasavīyas* of the *Rājasūya* and then those of the *Vājapeya*. Because, by *Rājasūya*, one becomes the king and by *Vājapeya*, the emperor. Kingship is secured first and then the status of the emperor. Therefore, one cannot perform *Rājasūya* after performing *Vājapeya*, because it would be a retrograde step for one to aspire for kingship after becoming emperor. The seven *Vājaprasavīyas* of Agni he offers last because the consecration of Agni is equal to all other consecrations. He who is consecrated by the *Agni-Savas* becomes everything, both king and emperor. Therefore he offers those of Agni-last.

**8.** He then anoints him on a black antelope skin. The black antelope skin is sacrifice. Thus he consecrates him by the sacrifice. He (anoints him) on the hairy side (of the skin); for, the hairs are the metres and thus he anoints him on the metres. He anoints him on the left side of the fire-altar; the significance of this will be told in due course. (He anoints him on the skin) with the neck part of it facing north; for, that is (the direction) of the gods.

**9.** Some anoint him on the right side of the fire-altar, saying that food is served from the right side and so they should anoint him from the same side as food. But this is not to be done so. Because the right side (south) is of the *Pitṛs* and he who is anointed on that side quickly joins the *Pitṛs*.

**10.** Some do the *abhiṣeka* on the *Āhavanīya* saying that *Āhavanīya* is the heavenly world and thus it is proper to anoint him in the heaven. It is not to be done so. That *Āhavanīya* is the divine self of the Yajamāna; and this Yajamāna's real self is his human body. By doing so, they mix up that divine body of his with this mortal body.

**11.** He should be anointed only at the left-side, because, that is the direction of both gods and men, which is in the north-east. Thereby they get him anointed while he is seated and settled in his own direction; for, one who is seated in his own area suffers no harm.

आसीनं भूतमभिषिञ्चेदास्त इव वै भूतस्तिष्ठन्तं बुभूषन्तं तिष्ठतीव वै बुभूषन्वस्ताजिने पुष्टिकाममभिषिञ्चेत्कृष्णाजिने ब्रह्मवर्चसकाममुभयोरुभयकामं तदुत्तरतः पुच्छस्योत्तरलोम प्राचीनग्रीवमुपस्तृणाति॥१२॥

आस्पृष्टं परिश्रितस्तद्यत्कृष्णाजिनमास्पृष्टं परिश्रितो भवति तथो हास्यैष दैव आत्मा कृष्णाजिनेऽभिषिक्तो भवत्यथ यदेनमन्वारब्धमग्निं तिष्ठन्तमभिषिञ्चति तथा हैतस्माद्दैवादभिषेकान्न व्यवच्छिद्यतेऽग्नौ हुत्वाथैनमभिषिञ्चति दैवो वा अस्यैष आत्मा मानुषोऽयं देवा उ वा अग्रेऽथ मनुष्यास्तस्मादग्नौ हुत्वाथैनं तस्यैव परिशिष्टेनाभिषिञ्चत्यत्र तꣳ स्रुवमनुप्रास्यति॥१३॥

अथैनं दक्षिणं बाहुमनु पर्यावृत्याभिषिञ्चति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामीति वाग्वै सरस्वती तस्या इदꣳ सर्वं यन्त्रꣳ सवितृप्रसूत एवैनमेतदनेन सर्वेण सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्ने साम्राज्येनाभिषिञ्चत्यत्र तं चमसमनुप्रास्यति यदत्र विलिप्तं तन्नेद्बहिर्धाग्नेरसदिति॥१४॥

तं वै मध्ये पार्थानामभिषिञ्चति संवत्सरो वै पार्थानि संवत्सरस्यैवैनमेतन्मध्यत आदधाति षट्पुरस्ताज्जुहोति षलुपरिष्टात् षड्वा ऋतव ऋतुभिरेवैनमेतत्सुषुवाणमुभयतः परिगृह्णाति बृहस्पतिः पूर्वेषामुत्तमो भवतीन्द्र उत्तरेषां प्रथमो ब्रह्म वै बृहस्पतिः क्षत्रमिन्द्रो ब्रह्मणा चैवैनमेतत्क्षत्रेण च सुषुवाणमुभयतः परिगृह्णाति॥१५॥ इति तृतीयं ब्राह्मणम्॥

॥ इति पञ्चमोऽध्यायः॥

**12.** One who is of status should be anointed while sitting; for, a man of status is seated as it were. One who is aspiring for status should be anointed while standing; for, the one who is aspiring is standing as it were. One who is desirous of prosperity should be anointed on the skin of a he goat and who is desirous of spiritual splendour, on a black antelope skin. One who desires both (should be anointed) on both. That skin, he spreads at the north side of the tail of the fire-altar with its hairy side above and its neck part towards the east.

**13.** (The skin) slightly touching the enclosing stones (of the altar), since the black antelope skin is just touching the enclosing stones, the divine body of his is anointed on the skin. Since he is consecrated while in contact with the erected altar, he is not separated from that divine consecration (of the Agni). He anoints him after making offering on the fire-altar, for, that altar is his divine body and this Yajamāna is his human form; thus the gods come first then the mortals. Therefore after making offering, he anoints him with the remains of that offering material. He then throws that *sruk* (into the fire).

**14.** He, after stationing himself near the right arm of the Yajamāna, anoints him (with the remains of the offering material) saying, "At the impulse of the divine Savitā, I anoint you, by the Asvins arms; by the hands of Pūṣā, by the speech of Sarasvatī; the supporter, by the sovereign power of Agni" — for, Sarasvatī is speech and all the support is hers. Impelled by Savitā, he thus anoints him with the support of Sarasvatī the speech, the supporter and by the sovereign power of Agni. Now he throws the *camasa* (cup) (into the fire) so that whatever offering material is sticking in it does not lie outside the fire.

**15.** He anoints him in the middle of the *Pārtha* offerings. The *Pārthas* are indeed the year and thus he places him in the middle of the year. Six (*Pārtha* offerings) he makes before (anointing) and six after; for, there are six seasons and thus he protects him by seasons (on either side). The one (addressed to ) Bṛhaspati is the last of the first six and that one (addressed to) Indra is the first of the latter six. Bṛhaspati represents Brahman (priesthood) and Indra represents Kṣatra (nobility). Thus he protects the one who is consecrated by priesthood and political power on both sides. (Third Brāhmaṇa Ends.)

**(Chapter Five Ends.)**

## षष्ठोऽध्यायः

### प्रथमं ब्राह्मणम्

अथातो राष्ट्रभृतो जुहोति राजानो वै राष्ट्रभृतस्ते हि राष्ट्राणि बिभ्रत्येता ह देवताः सुता एतेन सवेन येनैतत्सोष्यमाणो भवति ता एवैतत्प्रीणाति ता अस्मा इष्टाः प्रीता एतꣳ सवमनुमन्यन्ते ताभिरनुमतः सूयते यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति न स यस्मै न तद्यद्राजानो राष्ट्राणि बिभ्रति राजान उ एते देवास्तस्मादेता राष्ट्रभृतः॥१॥

यद्वेवैता राष्ट्रभृतो जुहोति प्रजापतेर्विस्रस्तान्मिथुनान्युदक्रामन्गन्धर्वाप्सरसो भूत्वा तानि रथो भूत्वा पर्यगच्छत्तानि परिगत्यात्मन्नधत्तात्मन्नकुरुत तथैवैनान्ययमेतत्परिगत्यात्मन्धत्त आत्मन्कुरुते॥२॥

स यः स प्रजापतिर्व्यस्रꣳसतायमेव स योऽयमग्निश्चीयतेऽथ यान्यस्मात्तानि मिथुनान्युद-क्रामन्नेतास्ता देवता याभ्य एतज्जुहोति गन्धर्वाप्सरोभ्यो जुहोति गन्धर्वाप्सरसो हि भूत्वोदक्रामन्नथो गन्धेन च वै रूपेण च गन्धर्वाप्सरसश्चरन्ति तस्माद्यः कश्च मिथुनमुपप्रैति गन्धं चैव स रूपं च कामयते॥३॥

मिथुनानि जुहोति मिथुनाद्वा अधि प्रजातिर्यो वै प्रजायते स राष्ट्रं भवत्यराष्ट्रं वै स भवति यो न प्रजायते तद्यन्मिथुनानि राष्ट्रं बिभ्रति मिथुना उ एते देवास्तस्मादेता राष्ट्रभृत आज्येन द्वादशगृहीतेन ता उ द्वादशैवाहुतयो भवन्ति तस्योक्तो बन्धुः॥४॥

पुꣳसे पूर्वस्मै जुहोत्यथ स्त्रीभ्यः पुमाꣳसं तद्वीर्येणात्यादधात्येकस्मा इव पुꣳसे जुहोति बह्वीभ्य

## Chapter Six

### BRĀHMAṆA I

**1.** He then offers the *Rāṣṭrabhṛt* offerings (those that sustain the state). The kings are indeed the sustainer of the states; because it is they who sustain the nations. These deities have been consecrated by this same *abhiṣeka* ceremony by which the Yajamāna is consecrated. He is thereby pleasing those deities. So pleased by (*Rāṣṭrabhṛt*) offering, they approve of his consecration and so approved by them, he is consecrated. For, he whom (other) kings agree to assume sovereignty, becomes a king; not the one in whose case they do not agree. In as much as the kings sustain the states, and these deities are kings, those *Rāṣṭrabhṛt* offerings are made.

**2.** Now why they offer *Rāṣṭrabhṛt* offerings — when Prajāpati was disjointed, couples came out in the form of Gandharvas and Apsarās. He assumed the form of a chariot and rounded them up. Having rounded them up, he absorbed them unto himself and made them his own. Similarly this Yajamāna, rounding them up, takes them into himself and owns them.

**3.** That Prajāpati who got disjointed is the same as this *Agni*-altar, which is being built up here. Those couples who went out of him are these very same deities to whom he now makes offerings. He offers to Gandharvas and Apsarās, since they then came out in the forms of Gandharvas and Apsarās. That is why, the Gandharvas and Apsarās go about with fragrance and beauty. That is why, when one approaches his mate, he likes to have sweet scent and beautiful form.

**4.** He offers pairs of oblations, for, birth is caused by pairs. He who procreates issues alone sustains the state and not the one who does not procreate. Since couples sustain the state and since these deities are in pairs, these oblations are called *Rāṣṭrabhṛtas* (sustainers of state). He makes these offerings with *ghee* taken twelve spoon-fulls and there are only twelve offerings. The reason for this has been explained.

**5.** First he makes the offering to the male (in the couple) and then to the female and thus bestows more prowess in the male. He makes the of-

इव स्त्रीभ्यस्तस्मादप्येकस्य पुꣳसो बह्व्यो जाया भवन्त्युभाभ्यां वषट्कारेण च स्वाहाकारेण च पुꣳसे जुहोति स्वाहाकारेणैव स्त्रीभ्यः पुमाꣳसमेव तद्वीर्येणात्यादधाति॥५॥

ऋताषाडृतधामेति सत्यसाट् सत्यधामेत्येतदग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस इत्यग्निर्ह गन्धर्व ओषधिभिरप्सरोभिर्मिथुनेन सहोच्चक्राम मुदो नामेत्योषधयो वै मुद ओषधिभिर्हीदꣳ सर्वं मोदते स न इदं ब्रह्म क्षत्रं पात्विति सन इदं ब्रह्म क्षत्रं गोपायत्वित्येतत्तस्मै[१] स्वाहावाट् ताभ्यः स्वाहेति तस्योक्तो बन्धुः॥६॥

सꣳहित इत्यसौ वा आदित्यः सꣳहित एष ह्यहोरात्रे संदधाति विश्वसामेत्येष ह्येव सर्वꣳ साम सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस इति सूर्यो ह गन्धर्वो मरीचिभिरप्सरोभिर्मिथुनेन सहोच्चक्रामायुवो नामेत्यायुवाना इव हि मरीचयः प्लवन्ते स न इदं ब्रह्म क्षत्रं पात्विति तस्योक्तो बन्धुः॥७॥

सुषुम्ण इति सुयज्ञिय इत्येतत्सूर्यरश्मिरिति सूर्यस्येव हि चन्द्रमसो रश्मयश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरस इति चन्द्रमा ह गन्धर्वो नक्षत्रैरप्सरोभिर्मिथुनेन सहोच्चक्राम भेकुरयो नामेति भाकुरयो ह नामैतेꣳभाꣳ हि नक्षत्राणि कुर्वन्ति स न इदं ब्रह्म क्षत्रं पात्विति तस्योक्तो बन्धुः॥८॥

इषिर इति क्षिप्र इत्येतद्विश्वव्यचा इत्येष हीदꣳ सर्वं व्यचः करोति वातो गन्धर्वः। तस्यापो अप्सरस इति वातो ह गन्धर्वोऽद्भिरप्सरोभिर्मिथुनेन सहोच्चक्रामोर्जो नामेत्यापो वा ऊर्जोऽद्भ्यो ह्यूर्गजायते स न इदं ब्रह्म क्षत्रं पात्विति तस्योक्तो बन्धुः॥९॥

भुज्युः सुपर्ण इति यज्ञो वै भुज्युर्यज्ञो हि सर्वाणि भूतानि भुनक्ति यज्ञो गन्धर्वः। तस्य दक्षिणा अप्सरस इति यज्ञो ह गन्धर्वो दक्षिणाभिरप्सरोभिर्मिथुनेन सहोच्चक्राम स्तावा नामेति दक्षिणा

१. सन to गोपायत्वेतत् missing in MD, H and P1

fering to a single male and to many females. That is why, a single man has many wives. To the male deity, he makes the offerings both with *vaṣaṭkāra* and *svāhākāra,* where as for the female deities, only with *svāhākāra.* Thereby he confers greater prowess in the males.

**6.** He offers saying, "The upholder of eternal law, the one who abides by eternal law" — meaning "the one who upholds truth and one who abides by truth." "Agni is the Gandharva and plants are his Apsarās" — for, as a Gandharva, Agni did go for mating with the plants as Apsarās; "Joys, by name" — for the plants are joys, since it is in the plants that everything he enjoys. "May he protect this our Brahman (priesthood) and Kṣatra (nobility); to him (male, Agni) *Svāhā; Vāṭ;* to them (females, plants) *Svāhā*." The meaning of this has been explained.

**7.** "To the *saṁhita* (closely linked)" — yonder sun is indeed the *saṁhita,* for, he links together the days and nights. "All wealth" — for, that sun is indeed all kinds of wealth. "Sūrya is the Gandharva and his rays are the Apsarās" — for, the sun as a Gandharva did go for mating with the rays as Apsarās. "Ayur by name" for the rays move together and float as it were. "May he protect this Brahman (priesthood) and Kṣatra (nobility)." The meaning of this has been explained.

**8.** "The most blessed" meaning "most worshipable" (moon); "Sun-rayed" –for, the moon's rays are like those of the sun. "Moon is the Gandharva and the stars (*nakṣatras*) are his Apsarās" — for, the moon as a Gandharva did go for mating with the stars as Apsarās. "Bhekuras by name" — meaning light-giving, for, the stars indeed give light. "May he protect this Brahman and the Kṣatra" — the meaning of this has been explained.

**9.** "The vigilant" — meaning "the swift." "All pervading" — for, the Vāyu indeed pervades all this. "Vāta is the Gandharva; his Apsarās are the waters" — for, wind as Gandharva did go for mating with waters, the Apsarās. "Ūrja by name" — for, waters are of course, called *urjāḥ;* for, food is produced from the waters. "May he protect this Brahman and this Kṣatra." The meaning of this has been told.

**10.** "The benefactor and one of good wings" — for, the sacrifice is indeed the benefactor, for, the sacrifice benefits all beings. "Yajña, the sacri-

वै स्तावा दक्षिणाभिर्हि यज्ञस्तूयतेऽथो यो वै कश्च दक्षिणां ददाति[२] स्तूयत एव स स न इदं ब्रह्म क्षत्रं पात्विति तस्योक्तो बन्धुः॥१०॥

प्रजापतिर्विश्वकर्मेति प्रजापतिर्वै विश्वकर्मा स हीदꣳ सर्वमकरोन्मनो गन्धर्वः। तस्य ऋक्सामान्यप्सरस इति मनो ह गन्धर्व ऋक्सामैरप्सरोभिर्मिथुनेन सहोच्चक्रामेष्टयो नामेत्यृक्सामानि वा एष्टय ऋक्सामैर्ह्याशासत इति तोऽस्त्वित्थं नोऽस्त्विति स न इदं ब्रह्म क्षत्रं पात्विति तस्योक्तो बन्धुः॥११॥

अथ रथशीर्षे जुहोत्येष वै स सव एतद्वै तत्सूयते यमस्मै तमेता देवता सवमनुमन्यन्ते याभिरनुमतः सूयते यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति न स यस्मै नाज्येन पञ्चगृहीतेन ता उ पञ्चैवाहुतयो हुता भवन्ति तस्योक्तो बन्धुः शीर्षतः शीर्षतो वा अभिषिच्यमानोऽभिषिच्यत उपरि धार्यमाण उपरि हि स यमेतदभिषिञ्चति समानेन मन्त्रेण समानो हि स यमेतदभिषिञ्चति सर्वतः[३] परिहारꣳ सर्वतो हि स यमेतदभिषिञ्चति॥१२॥

यद्वेव रथशीर्षे जुहोत्यसौ वा आदित्य एष रथ एतद्वै तद्रूपं कृत्वा प्रजापतिरेतानि मिथुनानि परिगत्यात्मन्नधत्तात्मन्नकुरुत तथैवैनान्ययमेतत्परिगत्यात्मन्धत्त आत्मन्कुरुत उपरि धार्यमाण उपरि हि स य एतानि मिथुनानि परिगत्यात्मन्नधत्तात्मन्नकुरुत समानेन मन्त्रेण समानो हि स य एतानि मिथुनानि परिगत्यात्मन्नधत्ताऽऽत्मन्नकुरुत सर्वतः परिहारꣳ सर्वतो हि स य एतानि मिथुनानि परिगत्यात्मन्नधत्तात्मन्नकुरुत॥१३॥

स नो भुवनस्य पते प्रजापत इति भुवनस्य ह्येष पतिः प्रजापतिर्यस्य त उपरि गृहा यस्य

२. दधाति TE
३. सर्वतैवैनमाभिचिञ्चाति found extra in TE given within brackets

fice is the Gandharva and *dakṣiṇā*, his Apsarās" — for, the sacrifice as a Gandharva did go for mating with the *dakṣiṇā*, the Apsarās. "*Stava* by name" — for, the Dakṣiṇās are of course, the praises and whosoever gives Dakṣiṇā is praised. "May he protect this Brahman and this Kṣatra" — the meaning of this has been explained.

**11.** "The lord of the beings, the Viśvakarmā" — Prajāpati the lord of beings is indeed the Viśvakarmā (maker of everything) for, he has made all this. "*Manas* is the Gandharva, the *Ṛks* and *Sāmans* are his Apsarās" — for, the mind as a Gandharva did go for mating with *Ṛks* and *Sāmans* are of course the wishes, for it is with the *Ṛks* and *Sāman* tunes that people pray for their desired objects like, "This be for us; thus let it be for us." "May he protect this Brahman and this Kṣatra." Its meaning has been told.

**12.** He then makes an offering on the top of the chariot. This is that actual *abhiṣeka*, which this Yajamāna is permitted to perform by those deities whose approval is there for his consecration. Because only he whom the (other) kings agree to own sovereignty becomes king and not he for whom they do not approve. He offers with ghee taken five spoon-fulls and this is offered as five oblations.The significance of this has been explained. The *abhiṣeka* is done on the head (top of the chariot) because, whoever is anointed, is done so from the head downwards. It is anointed while being held above, for, one who is anointed is above (others). He anoints with the same *mantra* each time, because the one who is anointed is one and the same person. (Anointing is made) by taking round the chariot's top, so that it is done in every direction. Thus he is anointed on all sides.

**13.** Why he offers on the top of the chariot — because this chariot is yonder sun. It is by assuming that form (of a chariot) Prajāpati enclosed all those couples (of deities) and absorbed them in him. Similarly, this Yajamāna, encloses all those and takes them into him and owns them. The top of the chariot is held above the fire, because he who was enclosing these and taking them into himself and owned them was above (those deities). He uses the same *mantra* because one and the same is he who encloses them, absorbs them and owns them unto himself.

**14.** "O lord of the universe, lord of the creatures" — for, this Agni is indeed the lord of the world and the lord of the beings. "You whose homes

वेहेत्युपरि च ह्येतस्य गृहा इह चास्मै ब्रह्मणेऽस्मै क्षत्रायेत्ययं वा अग्निर्ब्रह्म च क्षत्रं च महि शर्म यच्छ स्वाहेति महच्छर्म यच्छ स्वाहेत्येतत्॥१४॥ इति प्रथमं ब्राह्मणम्॥

## द्वितीयं ब्राह्मणम्

अथ वातहोमाञ्जुहोतीमे वै लोका एषोऽग्निर्वायुर्वातहोमा एषु तल्लोकेषु वायुं दधाति तस्मादयमेषु[1] लोकेषु वायुः॥१॥

बाह्येनाग्निमाहरत्यास्तो वा अस्य स वायुर्य एषु लोकेष्वथ य इमाँल्लोकान्परेण वायुस्तमस्मिन्नेत-द्दधाति बहिर्वेदेरियं वै वेदिरास्तो वा अस्य स वायुर्योऽस्यामथ य इमां परेण वायुस्तमस्मिन्नेतद्दधात्यञ्जलिना न ह्येतस्येतीवाभिपत्तिरस्ति स्वाहाकारेण जुहोति ह्यधोऽधो धुरमसौ वा आदित्य एष रथोऽर्वाचीनं तदादित्याद्वायुं दधाति तस्मादेषोऽर्वाचीनमेवातः पवते॥२॥

समुद्रोऽसि नभस्वानित्यसौ वै लोकः समुद्रो नभस्वानार्द्रदानुरित्येष ह्यार्द्रं दधाति तद्योऽमुष्मिँल्लोके वायुस्तमस्मिन्नेतद्दधाति शंभूर्मयोभूरभि मा वाहि स्वाहेति शिवः स्योनोऽभि मा वाहीत्येतत्॥३॥

मारुतोऽसि मरुतां गण इत्यन्तरिक्षलोको वै मारुतो मरुतां गणस्तद्योऽन्तरिक्षलोके वायुस्तस्मिन्नेतद्दधाति शंभूर्मयोभूरभि मा वाहि स्वाहेति शिवः स्योनोऽभि मा वाहीत्येतत्॥४॥

अवस्यूरसि दुवस्वानित्ययं वै लोकोऽवस्यूर्दुवस्वाꣳस्तद्योऽस्मिंल्लोके वायुस्तमस्मिन्नेतद्दधाति शंभूर्मयोभूरभि मा वाहि स्वाहेति शिवः स्योनोऽभि मा वाहीत्येतत्॥५॥

त्रिभिर्जुहोति त्रय इमे लोका अथो त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तैव तदेषु लोकेषु वायुं दधाति॥६॥

१. तस्मादिम एषु TE

are above and here (below)" — for, his dwellings are both above and here below. "To this Brahman and this Kṣatra of ours" — for, this Agni is indeed the priesthood and royal power. "You ensure great protection — *svāhā*" meaning "provide powerful protection — *svāhā* ." (First Brāhmaṇa Ends.)

**BRĀHMAṆA II**

**1.** He then offers the *Vāta homas.* This *Agni*-altar is these worlds and *Vāta homas* means Vāyu. So he puts wind in these worlds and hence there is wind in these worlds.

**2.** From outside the *vedī,* he brings *Vāta* (air). That wind which is in these worlds is already there in the altar and so he brings the air which is outside these worlds. He brings it by his two palms held together, for, it is only this way, it (wind) can be fetched. He offers it with a *svāhākāra,* for, he offers it just beneath the pole of the chariot. This chariot is yonder sun and thus he places the wind on this side of the sun. Hence wind blows on this side of the sun.

**3.** He says, "You are the windy ocean" — for, the windy ocean is no doubt, the yonder world (the sky). "You are the one who gives moisture" – for, it is he (the wind) that gives moisture. So, that wind which is in the yonder world, that he puts into it. "Blow kindly and in plenty upon me - *svāhā*" — which means "blow gently and in plenty."

**4.** "You are the Māruta, the troupe of Maruts" — the Māruta and the troupe of Maruts is indeed the aerial region. Thereby he places that wind into it which is in the aerial region. "Blow kindly and in plenty upon me - *svāhā*" — which means "blow gently and in plenty."

**5.** "You are the worshipable one and affording protection" — this terrestrial world is the worshipable one and one that affords protection. Thereby he puts into it that wind which is in this world. "Blow kindly and in plenty upon me - *svāhā*" which means "blow gently and in plenty."

**6.** He makes offerings with three *mantras,* for, these worlds are three; and Agni is threefold. As great as Agni is, as great as is his size, with so much he thus puts air into these worlds.

यद्वेव वातहोमाञ्जुहोत्येतमेवैतद्रथं युनक्त्येतद्वै देवा एतꣳ रथꣳ सर्वेभ्यः कामेभ्योऽयुञ्जत युक्तेन समश्नवामहा इति तेन युक्तेन सर्वान्कामान्त्समाश्नुवत तथैवैतद्यजमान एतꣳ रथꣳ सर्वेभ्यः कामेभ्यो युङ्क्ते युक्तेन समश्नवा इति तेन युक्तेन सर्वान्कामान्त्समश्नुते॥७॥

वातहोमैर्युनक्ति प्राणा वै वातहोमाः प्राणैरेवैनमेतद्युनक्ति त्रिभिर्युनक्ति त्रयो वै प्राणाः प्राण उदानो व्यानस्तैरेवैनमेतद्युनक्ति हस्ताभ्याꣳ हस्ताभ्याꣳ हि योग्यं युञ्जन्त्यधोऽधो[२] धुरमधोऽधो हि धुरं योग्यं युञ्जन्ति विपरिक्रामं विपरिक्रामꣳ हि योग्यं युञ्जन्ति॥८॥

स दक्षिणायुग्यमेवाग्रे युनक्त्यथ सव्यायुग्यमथ दक्षिणाप्रष्टिमेवं देवत्रेतरथा मानुषे तं नाभि-युञ्ज्यान्नेद्युक्तमभियुनजानीति वाहनं तु दद्याद्युक्तेन भुनजा इति तमुपर्येव हरन्त्याध्वर्योराव-सथादुपरि ह्येष तमध्वर्यवे दधाति स हि तेन करोति तं तु दक्षिणानां कालेऽनुदिशेत॥९॥

अथ रुङ्मतीर्जुहोत्यत्रैष[३] सर्वोऽग्निः सꣳस्कृत स एषोऽत्र रुचमैच्छत्तस्मिन्देवा एताभी रुङ्मतीभी[४] रुचमदधुस्तथैवास्मिन्नयमेतद्दधाति॥१०॥

यद्वेव रुङ्मतीर्जुहोति[५] प्रजापतेर्विस्रस्ताद्रुगुदक्रामत्तं यत्र देवाः समस्कुर्वꣳ स्तदस्मिन्नेताभी रुङ्मतीभी[६] रुचमदधुस्तथैवास्मिन्नयमेतद्दाधति॥११॥

२.अधोऽधो धुरमधोऽधो हि धुरं योग्यं युञ्जन्ति हस्ताभ्यां हस्ताभ्यां हि योग्यं युञ्जति MD and V2 have this mutually intercharged sequence

३. रुग्मतीः TE

४. रुग्मयीभिः TE

५. रुग्मती TE

६. रुग्मयी TE

**7.** As to why he makes the *Vāta homas* is — thereby he yokes that chariot of his. It was by them that the gods yoked that chariot for obtaining of all their desires, thinking "let us achieve all our desired objects by yoking it." Similarly, this Yajamāna yokes that chariot for obtaining all his desires, thinking "with it yoked, let me obtain." By yoking it, he achieves all his desired objects.

**8.** He yokes it by means of the *Vāta homas*. The *Vāta homas* are indeed *prāṇas* and it is with the *prāṇas* he yokes it. He yokes with three oblations, because there are of course, three *prāṇas,* namely *prāṇa, udāna* and *vyāna* and with them he yokes. He offers with his hands, for, it is with the hands, the horses are yoked (to a chariot). Below the pole (of the chariot) he offers, because the horse is yoked below the shaft. Moving round he offers, because the yoking (of the horse) is done by going round (the pole).

**9.** He first yokes the right-side main horse (offers the first *Vāta homa* on the right side), then the left-side main horse (offers the second *Vāta homa* on the left side) and then the right-side horse (the third *Vāta homa* on the right side). This is the order in the case of the divine beings. The human practice is the other way. Let him not yoke that chariot again (with actual horses). By doing so he will be yoking the chariot already yoked (since the *Vāta homas* themselves are the horses). Let him give away the chariot thinking "I will have the benefit of the yoking (since it is yoked)." They take it as far as the Adhvaryu's residence holding it high, because above is that (Agni). He entrusts it to the Adhvaryu, for, it is he who handles it. Let him not give it away to him. At the time he distributes *dakṣiṇā*; he gives it away.

**10.** Then he offers the *Ruṅmati* oblations. Here the whole *Agni*-altar was fashioned. He now desired to be shining (*ruc*) and the gods, by means of these shining oblations endowed him with brilliance. In the same way, this Yajamāna now bestows brilliance to him.

**11.** Why he offers the *Ruṅmati* oblations — from out of Prajāpati who got disjointed, brilliance came out. When the gods restored him, they by means of these *Ruṅmati* offerings restored his brilliance. In the like manner, this Yajamāna endows brilliance unto him.

यास्ते अग्ने सूर्ये रुचो या वो देवाः सूर्ये रुचो रुचं नो देहि ब्राह्मणेष्विति रुचꣳ रुचमित्यमृतत्वं वै रुगमृतत्वमेवास्मिन्नेतद्दधाति तिस्त्र आहुतीर्जुहोति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्रुचं दधाति ॥१२॥

अथ वारुणीं जुहोत्यत्रैष सर्वोऽग्निः सꣳस्कृतः स एषोऽत्र वरुणो देवता तस्मा एतद्धविर्जुहोति तदेनꣳ हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यते वारुण्यर्चा स्वेनैवैनमेतदात्मना स्वया देवतया प्रीणाति ॥१३॥

यद्वेव वारुणीं जुहोति प्रजापतेर्विस्त्रस्ताद्वीर्यमुदक्रामत्तं यत्र देवा समस्कुर्वꣳस्तदस्मिन्नेतया वीर्यमदधुस्तथैवास्मिन्नयमेतद्दधाति वारुण्यर्चा क्षत्रं वै वरुणो वीर्यं वै क्षत्रं वीर्येणैवास्मिन्नेतद्वीर्यं दधाति॥१४॥

तत्त्वा यामि ब्रह्मणा वन्दमान इति तत्त्वा याचे ब्रह्मणा वन्दमान इत्येतत्तदाशास्ते यजमानो हविर्भिरिति तदयमाशास्ते यजमानो हविर्भिरित्येतदुहेलमानो वरुणेह बोधीत्यक्रुध्यन्नो वरुणेह बोधीत्येतदुरुशꣳस मा न आयुः प्रमोषीरित्यात्मनः परिदां वदते॥१५॥

अथार्काश्वमेधयोः सन्ततीर्जुहोत्ययं वा अग्निरर्कोऽसावादित्योऽश्वमेधस्तौ सृष्टौ नानैवास्तां तौ देवा एताभिराहुतिभिः समतन्वन्त्समदधुस्तथैवैनावयमेतदेताभिराहुतिभिः सन्तनोति संदधाति॥१६॥

स्वर्ण घर्मः स्वाहेत्यसौ वा आदित्यो घर्मोऽमुं तदादित्यमस्मिन्नग्नौ घर्मस्तदमुमादित्यमस्मिन्नग्नौ प्रतिष्ठापयति॥१७॥

**12.** "O Agni, what brilliance of yours is in the sun." "O gods, what brilliance of yours is -- are in the sun — give that brilliance in our Brahmans (priesthood)." In this *mantra* thus he repeats the word "*rucam*" each time. Brilliance is immortality and thereby he bestows immortality unto him. He makes three offerings, for, Agni is threefold. As great as Agni is, as great as is his size, that much brilliance he bestows unto him.

**13.** He then makes the offering to Varuṇa. The whole Agni that has been fashioned now is the deity Varuṇa. So he makes this offering of *havis*. With this oblation he makes him (Agni) a deity. That for which *havis* is prepared, that alone is a deity and not the one for whom it is not prepared. He offers it with *Ṛk* addressed to Varuṇa. Thus he gratifies him (Agni) by his own self and by his own deity.

**14.** As to why he offers the offering to Varuṇa — from Prajāpati who was disjointed, the strength came out. When the gods replenished him, they put back that strength into him by means of this Vāruṇa offering. Similarly, this Yajamāna puts that strength into this (Agni). He offers with a *Ṛk* addressed to Varuṇa; for, Varuṇa is Kṣatra (nobility) and strength means Kṣatra. Thus he bestows strength by means of strength.

**15.** He says, "I appeal to you, worshipping you with Vedic prayer" meaning, "I beseech you by praying with this Vedic prayer." "This Yajamāna appeals to you with offering of *havis*", meaning "this Yajamāna is requesting you with offerings." "O Varuṇa listen here, without getting annoyed." Meaning — "without getting angry, listen to this our request." "O ruler of vast (territory), do not take our life from us" — thus he announces his surrender.

**16.** He then offers the oblations called *Santatīs* of Arka and *Aśvamedha* (those that join together the fire and the *Aśvamedha*). This *Agni*-altar is indeed the light and *Aśvamedha* is of course, yonder sun. When produced, they were separate. The gods knit the two together by these offerings and united them. In the same manner, this Yajamāna knits those two together with these offerings and unites them.

**17.** "Heaven-like heat, *svāhā*" — the heat or *gharma* is yonder sun; thus he establishes yonder sun in the *Agni*-altar.

स्वर्णार्कः स्वाहेत्ययमग्निरर्कस्तदिममग्निममुष्मिन्नादितये[७] प्रतिष्ठापयति॥१८॥

स्वर्णशुक्रः स्वाहेत्यसौ वा आदित्यः शुक्रस्तं पुनरमुत्र दधाति॥१९॥

स्वर्णज्योतिः स्वाहेत्ययमग्निर्ज्योतिस्तं पुनरिह दधाति॥२०॥

स्वर्णसूर्यः स्वाहेत्यसौ वा आदित्यः सूर्यस्तदमुमादित्यमस्य[८] सर्वस्योत्तमं दधाति तस्मादेषोऽस्य सर्वस्योत्तमः पञ्चैता आहुतीर्जुहोति पञ्चचितिकोऽग्निः पञ्चर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनावेतत्संतनोति संदधाति यद्वेवाह स्वर्णघर्मः स्वाहा स्वर्णार्कः स्वाहेत्यस्यैवैतान्यग्नेर्नामानि तान्येतत्प्रीणाति तानि हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यतेऽथो एतानेवैतदग्नीनस्मिन्नग्नौ नामग्राहं दधाति पञ्चैता आहुतीर्जुहोति पञ्चचितिकोऽग्निः पञ्चर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति॥२१॥

अथात आहुतीनामेवावपनस्य यां कां च ब्राह्मणवतीमाहुतिं विद्यात्तामेतस्मिन् काले जुहुयात्कामेभ्यो वा एतꣳ रथं युङ्क्ते तद्यां कां चात्राहुतिं जुहोत्यासां ताꣳ सतीं जुहोति॥२२॥

तदाहुर्न जुहुयान्नेदतिरेचयानीति स वै जुहुयादेव कामेभ्यो वा एता आहुतयो हूयन्ते न वै कामानामतिरिक्तमस्ति॥२३॥ इति द्वितीयं ब्राह्मणम्॥

## तृतीयं ब्राह्मणम्

अथ प्रत्येत्य धिष्ण्यानां काले धिष्ण्यान्निवपत्यग्नय एते यद्धिष्ण्या अग्नीनेवैतच्चिनोति ता एता विशः क्षत्रमयमग्निश्चितः क्षत्रं च तद्विशं च करोत्ययमुं पूर्वं चिनोत्यथेमान् क्षत्रं तत्कृत्वा

७. अर्क इमं तदग्निं My
८. सूर्य अमुं तदादित्यं My

**18.** "Heaven-like light, *svāhā*" — the light is indeed this *Agni*-altar and thus he establishes this light in yonder sun.

**19.** "Heaven-like brilliance, *svāhā*" — brilliance, no doubt is yonder sun. He thus places him on the *Agni*-altar.

**20.** "Heaven-like glow, *svāhā*" — glow is indeed this Agni and thus he places him here.

**21.** "Heaven-like Sūrya, *svāhā*" — Sūrya is doubtless, yonder sun. He thus establishes yonder sun, as the ultimate, because he is the highest of all. Thus he offers these five oblations; for, *Agni*-altar is of five layers, the year consists of five seasons and the year is *Agni*-altar. As great as Agni is, as great as is his size, with so much he thus knits together (the sun and *Aśvamedha*) and unites them. When he said, "Heaven-like heat" and "Heaven-like light", he refers to the names of this *Agni*-altar. They please him and they are made into deities by the *havis*. That for which the *havis* is prepared that alone is the deity and not the one for which it is not prepared. Thus he establishes these Agni-deities themselves into this fire - altar by calling them by their names. Why he offers five of these oblations is because the *Agni*-altar is of five layers. The year is of five seasons and year is *Agni*-altar. As great as Agni is, as great as is his size, by so much food, he thus pleases him.

**22.** Now about the insertion (positioning) of the (other) offerings. If he knows of any oblations suggested by (indicated by) a Brāhmaṇa text, that he can offer at this time. For, he yokes this chariot for obtaining his wishes and whatever oblation he now offers, it is (as good as) a fulfilled wish.

**23.** Some say, these (other) oblations should not be offered, since they will be in excess. Let him offer them. Because it is for (fulfilment of ) special desires, these oblations are offered and there is no question of excess in the case of desires. (Second Brāhmaṇa Ends.)

**BRĀHMAṆA III**

**1.** After having returned (to the *Sadas*) he puts up the *Dhiṣṇyā* hearths in time. These *Dhiṣṇyās* are fires and thus he builds up fire-altars. They are

विशं करोत्येक एष भवत्येकस्थं तत्क्षत्रमेकस्थाꣳ श्रियं करोति बहव इतरे विशि तद्भूमानं दधाति पञ्चचितिक एष भवत्येकचितिका इतरे क्षत्रं तद्वीर्येणात्यादधाति क्षत्रं विशो वीर्यवत्तरं करोत्यूर्ध्वमेतं चिनोति क्षत्रं तदूर्ध्वं चितिभिश्चिनोति तिरश्च इतरान् क्षत्रायैवैतद्विशम-धस्तादुपनिषादिनीं करोत्युभाभ्यां यजुष्मत्या च लोकंपृणया चैतं चिनोती माँल्लोकंपृणयैव चिनोति क्षत्रं वै लोकंपृणा क्षत्रं तद्विश्यत्तारं दधाति॥१॥

उभयाꣳश्चिनोत्यध्वरस्य चाग्नेश्चाध्वरस्य पूर्वानथाग्नेस्तस्योक्तो बन्धुर्य-यमेवाध्वरधिष्ण्यं निवपति तं - तं चिनोत्याग्नीध्रीयं प्रथमं चिनोति तꣳ हि प्रथमं निवपति दक्षिणत उदयङ्ङासीनस्तस्योक्तो बन्धुः॥२॥

तस्मिन्नष्टाविष्टका उपदधात्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावन्तमेवैनमे-तच्चिनोति तासामश्मा पृश्निर्नवमो नव वै प्राणाः सप्त शीर्षन्नवाञ्चौ द्वौ तानेवास्मिन्नेतद्दधाति यश्चितेऽग्निर्निधीयते स दशमो दश वै प्राणा मध्यमाग्नीध्रं मध्यतस्तत्प्राणान्दधाति मध्ये ह वा एतत्प्राणाः सन्त इतिं चेति चात्मानमनु व्युच्चरन्ति॥३॥

एकविꣳशतिꣳ होत्रीय उपदधात्येकविꣳशतिर्वेव परिश्रितस्तस्योक्तो बन्धुरेकादश ब्राह्मणाच्छꣳस्य एकादशाक्षरा वै त्रिष्टुप् त्रैष्टुभ इन्द्र ऐन्द्रो ब्राह्मणाच्छꣳस्यष्टावष्टावितरेषु तस्योक्तो बन्धुः॥४॥

like the Viś (followers) to the main *Agni*-altar which is like the Kṣatra (the royal head). Thus he sets up the Kṣatra and the Viś. He first builds up him (Kṣatra, the *Agni*-altar) and then these Viś (*Dhiṣṇyās,* the followers). That (*Agni*-altar) is only one; thus he makes the royal authority abide in one person. The others (*Dhiṣṇyās*) are numerous; thus there are many subjects. That (*Agni*-altar) is made of five layers and the others are single layered. Thus he endows pre-eminence in Kṣatra and makes the chief-tain more powerful than the subjects. He builds that (*Agni*-altar) upwards by layers and the others he constructs sideways. Thus he makes the subjects subservient to the Kṣatra by being under (him). The *Agni*-altar he builds up with bricks having specific *Yajus* formulas; whereas, these (*Dhiṣṇyās*) he constructs only with *lokaṁpṛṇās. Lokaṁpṛṇā* is Kṣatra and that he places as eater, among the subjects.

**2.** Both (types of ) *Dhiṣṇyās* he builds up, those of the *Soma* sacrifice and of the *Agni*-altar. First those of the Adhvara and then those of the *Agni*-altar. Its purport has been explained. Whatever *Soma-Dhiṣṇyās* he puts up (at the *Soma* sacrifice) that he builds up. First he builds up the Āgnidhrīya hearth. He builds it sitting on the right side facing north. Its significance has been told.

**3.** He places eight bricks in it, for, the Gāyatrī is eight-syllabled; and *Agni*-altar belongs to Gāyatrī. As great as Agni is, as great as is his size, so great he thus builds it up. The Pṛśni (the stone with spots) is the ninth of them, for the *prāṇas* are nine in number; seven in the head and two downward. Those (*prāṇas*) he puts here. The fire that he places on the built *Dhiṣṇyā* is the tenth; for, there are indeed ten *prāṇas* and the Āgnīdhra is in the middle (between the Gārhapatya and Āhavanīya). Thus he places the *prāṇas* in the middle. The *prāṇas* being in the middle of the body, they move this way and that way in the body.

**4.** Twenty-one bricks he uses for the Hotrīya hearth and there are twenty-one *pariśrits* (enclosing stones). Its significance has been said. He places eleven bricks for the hearth of Brāhmaṇācchaṁsin. For, the Triṣṭubh metre has eleven syllables and Indra belongs to Triṣṭubh and Brāhmaṇācchaṁsin belongs to Indra. In others, he places eight- eight bricks and its significance has been told.

षण्मार्जालीये षड्वा ऋतवः पितरस्त्ँ हैतमृतवः पितरो दक्षिणतः पर्यूहिरे स एषामेष दक्षिणतः स वा इतीममुपदधातीतीमानित्यमुं विशमेवैतत्क्षत्रमभि संमुखां करोति॥५॥

अथैनान्परिश्रिद्भिः परिश्रयत्यापो वै परिश्रितोऽद्भिरेवैनाँस्तत्परितनोति स वै पर्येव निदधाति क्षत्रँ हैता अपां याः खातेन यन्त्यथ हैता विशो यानीमानि वृथोदकानि स यदमुं खातेन परिश्रयति क्षत्रे तत्क्षत्रं दधाति क्षत्रं क्षत्रेण परिश्रयत्यथ यदिमान्पर्येव निदधाति विशि तद्विशं दधाति विशा विशं परिश्रयति तेषां वै यावत्य एव यजुष्मत्यस्तावत्यः परिश्रितः क्षत्रायैव तद्विशं कृतानुकरामनुवर्त्मानं करोति॥६॥

अथैषु पुरीषं निवपति तस्योक्तो बन्धुस्तूष्णीमनिरुक्ता हि विलथाग्नीषोमीयस्य पशुपुरोलाशमनु दिशामवेष्टिं निर्वपति दिश एषोऽग्निस्ताभ्य एतानि हवीँषि निर्वपति तदेना हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यते पञ्च भवन्ति पञ्च हि दिशः॥७॥

तदाहुर्दशहविषमेवैतामिष्टिं निर्वपेत्सा सर्वस्तोमा सर्वपृष्ठा सर्वाणि छन्दाँसि सर्वा दिशः सर्व ऋतवः सर्वम्वेतदयमग्निस्तदेवँ हविषा देवताः करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यते दश भवन्ति दशाक्षरा विराड्विराळग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणा अग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति॥८॥

तद्वै देवस्वामेवैतानि हवीँषि निर्वपेदेता ह देवताः सुता एतेन सवेन येनैतत्सोष्यमाणो भवति ता एवैतत्प्रीणाति ता अस्मा इष्टाः प्रीता एवँ सवमनुमन्यन्ते ताभिरनुमतः सूयते यस्मै वै

**5.** He places six bricks in the Mārjālīya hearth, for, there are six seasons, the *pitṛs*. The seasons, namely the *pitṛs* indeed put up a wall round that fire from the south. This (Mārjālīya) is to the south of those other hearths. This he lays down in this direction and those others in that direction and that *Agni*-altar in this way (so that all the *Dhiṣṇyās* face the *Agni*-altar). Thus he makes the Viś (subjects) face the Kṣatra.

**6.** He now encloses each of the *Dhiṣṇyās* with the *pariśrits* (enclosing sticks). *Pariśrits* are indeed waters and it is with waters he encloses them. He merely places them all around. The waters which flow out through a channel are the Kṣatra and these stagnating waters are the Viś (people). In the case of the *Agni*-altar, he encloses it with *pariśrit* stones dug in (fixed in the ground); thereby surrounds Kṣatra and adds Kṣatra (royal power) to Kṣatra (royalty). By just keeping these *pariśrits* around the *Dhiṣṇyās*, he surrounds the Viś with Viś and thus adds the people to the people. He places so many *pariśrits* around each hearth as there are bricks with *Yajus* formulas in them. Thus he makes those common folks obedient and submissive to the Kṣatra.

**7.** He then scatters loose soil on each of these *Dhiṣṇyās*. Its significance has been told. Silently he scatters, since the subjects are indistinct. After offering the *Puroḍāśa* of the Agniṣṭomīya, he gets ready the propitiatory oblations to the quarters. This *Agni*-altar is the quarters and for them he prepares these oblations. By means of this oblation, he makes them a deity. That for which *havis* is prepared is alone the deity and not the one for which it is not prepared. These *havis* are five in number for there are five quarters.

**8.** Now they say, "Let *havis* be prepared for ten oblations in this *iṣṭi*, because this *iṣṭi* involves all the *stomās*, all the *pṛṣthās*, all metres, all quarters and all seasons; this *Agni*-altar is all these and thus (only) he makes them the deities. Because that alone is a deity for whom *havis* are prepared and not the one for which it is not prepared." They happen to be ten (*havis*); for, the Virāḍ metre has ten syllables and Virāḍ is *Agni*-altar; there are ten directions and the directions are *Agni*-altar; there are ten *prāṇas* and *prāṇas* are *Agni*-altar. As great as Agni is, as great as is his size, with so much food, he thus gratifies him.

**9.** He may also prepare these oblations for the Devasva (deities eight in number starting with Sāvitrī Satyaprasavā) to whom offering is made at the

राजानो राज्यमनुमन्यन्ते स राजा भवति स यस्मै न तद्यदेता देवताः सुता एतेन सवेन यद्वैनमेता देवता एतस्मै सवाय सुवते तस्मादेता देवस्वः॥९॥

ता वै द्विनाम्न्यो भवन्ति द्विनामा वै सवेन सुतो भवति यस्मै वै सवाय सूयते[1] येन वा सवेन सूयते तदस्य द्वितीयं नामाष्टौ भवन्त्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति॥१०॥

तदाहुर्नैतानि हवीꣳषि निर्वपेन्नेदतिरेचयानीति तानि वै निर्वपेदेव कामेभ्यो वा एतानि हवीꣳषि निरुप्यन्ते न वै कामानामतिरिक्तमस्ति यद्वै किं च पशुपुरोळाशमनु हविर्निरुप्यते पशावेव स मध्यतो मेधो धीयत उभयानि निर्वपत्यध्वरस्य चाग्नेश्चाध्वरस्य पूर्वमथाग्नेस्तस्योक्तो बन्धुरुच्चैः पशुपुरोलाशो भवत्युपाꣳश्वेतानीष्टिर्ह्यनुब्रूहि प्रेष्येति[2] पशुपुरोलाशस्याहानुब्रूहि यजेत्येतेषामिष्टिर्हि समानः स्विष्टकृत्समानीळेष्टा देवताः भवन्त्यसमवहितꣳ स्विष्टकृते॥११॥

अथैनं पूर्वाभिषेकेणाभिमृशति सविता त्वा प्रसवानाꣳ[3] सुवतामेष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजेति ब्राह्मणानेवापोद्धरत्यनाद्यान् करोति॥१२॥ इति तृतीयं ब्राह्मणम्॥

१. सुवते V2 , My
२. प्रेषेति TE
३. त्वा सवानाꣳ MD

consecration in Rājasūya). For, these are the deities which are consecrated by this ceremony by which he is now being anointed. They get gratified by these. Thus offered and gratified by these (oblations), they approve of this consecration. So approved by them he is anointed. Only he for whom the (other) kings approve vesting of sovereignty, becomes the king and not the one for whom, not so approved. These deities are being thus consecrated by this consecration, approve of his consecration and hence they are called Devasva.

**10.** These deities have two names just as the one who is consecrated by this ceremony comes to posses two names. For, the very ceremony of consecration for which he is approved and by being consecrated, becomes his second name. (For example, he who performs Vājapeya gets the second name Vājapeya Yājin). These Devasva are eight in number, for, the Gāyatrī metre is eight-syllabled, and *Agni*-altar belongs to Gāyatrī. As great as Agni is, as great as is his size, with that much food, he thus gratifies him.

**11.** They say that these *havis* (to Devasva) should not be offered, because they will be in excess. But let him, albeit offer them, for, these are offered for fulfilment of special wishes and as far as wishes are concerned, there is nothing like excess. Whatever oblation is offered after the *Paśu-Puroḍāśa* (*Puroḍāśa* connected with *Paśu yajña*) that is placed inside the *Paśu* itself as its sacrifical essence (restored to that *paśu* before being offered). He offers both kinds of oblations; those of the *Soma Yāga* and those of the *Agnicayana*. First he offers those of the *Soma Yāga* and then of the *Agnicayana*. The significance of this has been explained. The *Paśu-Puroḍāśa* is offered in a loud voice and these other offerings are made in a low tone, for, they constitute an *iṣṭi*. With the *Paśu-Puroḍāśa*, the Adhvaryu says, "*Anubrūhi-Preṣya*" and for these "*Anubrūhi -Yaja*" for, they are *iṣṭi*. For these oblations, there is a common Sviṣṭakṛt and a common *Iḍā*. Now the Devasū deities have been offered oblations and the Sviṣṭakṛt of the *Paśu-Puroḍāśa* is yet to come.

**12.** He then touches the *Agni*-altar with the chant of the preliminary consecration, "May Savitā hasten you for Prasavās...." "This man, O people, is your king. Soma is the king of the Brāhmaṇas...." Thus he excludes Brāhmaṇas from the supremacy of the king and render them inaccessable for being exploited (fed upon) by the king. (Third Brāhmaṇa Ends.)

## चतुर्थं ब्राह्मणम्

अथ प्रातः प्रातरनुवाकमुपाकरिष्यन्नग्निं युनक्ति युक्तेन समश्नवा इति तेन युक्तेन सर्वान् कामान्त्समश्नुते तं वै पुरस्तात्सर्वस्य कर्मणो युनक्ति तद्यत्किञ्चात्र ऊर्ध्वं क्रियते युक्ते तत्सर्वꣳ समाधीयते परिधिषु युनक्त्यग्नय एते यत्परिधयोऽग्निभिरेव तदग्निं युनक्ति॥१॥

स मध्यमं परिधिमुपस्पृश्यैतद्यजुर्जपत्यग्निं युनज्मि शवसा घृतेनेति बलं वै शवोऽग्निं युनज्मि बलेन च घृतेन चेत्येतद्दिव्यꣳ सुपर्णं वयसा बृहन्तमिति दिव्यो वा एष सुपर्णो वयसो बृहन्धूमेन तेन वयं गमेम ब्रध्नस्य विष्टपꣳ स्वो रुहाणा अधि नाकमुत्तममिति स्वर्गो वै लोको नाकस्तेन वयं गमेम ब्रध्नस्य विष्टपꣳ स्वर्गं लोकꣳ रोहन्तोऽधि नाकमुत्तममित्येतत्॥२॥

अथ दक्षिण इमौ ते पक्षा अजरौ पतत्रिणौ याभ्याꣳ रक्षाꣳस्यपहꣳस्यग्न इति यथैव[1]यजुस्तथा बन्धुस्ताभ्यां पतेम सुकृतामु लोकं यत्र ऋषयो जग्मुः प्रथमजाः पुराणा इत्यमूनेतदृषीनाह॥३॥

अथोत्तर इन्दुर्दक्षः श्येन ऋतावा हिरण्यपक्षः शकुनो भुरण्युरित्यमृतं वै हिरण्यममृतपक्षः शकुनो भर्तेत्येतन्महान्त्सधस्थे ध्रुव आ निषत्तो नमस्ते अस्तु मा मा हिꣳसीरित्यात्मनः परिदां वदते॥४॥

तद्यन्मध्यमं यजुः स आत्माथ ये अभितस्तौ पक्षौ तस्मात्ते पक्षवती भवतः पक्षौ हि तौ त्रिभिर्युनक्ति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्युनक्ति॥५॥

अथ राजानमभिषुत्याग्नौ जुहोत्येष वै स सव एतद्वै तत्सूयते यमस्मै तमेता देवताः सवमनुमन्यन्ते याभिरनुमतः सूयते यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति न स यस्मै न तद्यदग्नौ

१. यथैव............बन्धु missing in MD

ते य एवमेतद्विदुर्येवैतत्कर्म कुर्वते मृत्वा पुनः संभवन्ति ते संभवन्त एवामृतत्वमभिसंभवन्त्यथ य एनमेवं[1] न विदुर्येवैतत्कर्म न कुर्वते मृत्वा पुनः संभवन्ति त एस्यैवान्नं पुनः पुनर्भवन्ति॥९॥

स यदग्निं चिनुत एतमेव तदन्तकं मृत्युꣳ संवत्सरं प्रजापतिमग्निमाप्नोति यं देवा आप्नुवन्नेतमुपधत्ते यथैवैनमदो देवा उपादधत परिश्रिद्भिरेवास्य रात्रीराप्नोति यजुष्मतीभिरहान्यर्धमासान्मासानृतून्लोकम्पृणाभिर्मुहूर्तान्॥१०॥

तद्याः परिश्रितो रात्रिलोकास्ता रात्रीणामेव साप्तिः क्रियते रात्रीणां प्रतिमा ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्य रात्रयस्तासामेकविꣳशतिं गार्हपत्ये परिश्रयति द्वाभ्यां नाशीतिं धिष्ण्येषु द्वे एक षष्टे शते आहवनीये॥११॥

अथ यजुष्मत्यो दर्भस्तम्बो लोगेष्टकाः पुष्करपर्णꣳ रुक्मपुरुषौ स्रुचौ स्वयमातृण्णा दूर्वेष्टका द्वियजू रेतः सिचौ विश्वज्योतिर्ऋतव्ये अषाळ्हा कूर्म उलूखलमुसले उखा पञ्च पशुशीर्षाणि पञ्चदशापस्याः पञ्च छन्दस्याःपञ्चाशत्प्राणभृतस्ता द्वाभ्यां न शतं प्रथमा चितिः॥१२॥

अथ द्वितीया पञ्चाश्विन्यो द्वे ऋतव्ये पञ्च वैश्वदेव्यः पञ्च प्राणभृतः पञ्चापस्या एकया न विꣳशतिर्वयस्यास्ता एकचत्वारिꣳशद्द्वितीया चितिः॥१३॥

अथ तृतीया स्वयमातृण्णा पञ्च दिश्या विश्वज्योतिश्चतस्र ऋतव्या दश प्राणभृतः षट्त्रिꣳशच्छन्दस्याश्चतुर्दश वालखिल्यास्ता एकसप्ततिस्तृतीया चितिः॥१४॥

अथ चतुर्थ्यष्टादश प्रथमा अथ द्वादशाथ सप्तदश ताः सप्तचत्वारिꣳशच्चतुर्थी चितिः॥१५॥

१. य एवं V2

**9.** Those who know this, doubtless and those who perform this action, they after death, come to life again and having come to life, attain immortality. He who does not know this or who does not perform this action, comes back to life after death and again become the food of this (death) as mortals.

**10.** When he builds up the *Agni*-altar, he obtains (the result of achieving) the Agni, Prajāpati, the year; the death and the liquidation, whom the gods achieved. He is laying him down whom the gods thus (then) laid down. He attains his nights by means of the *pariśrits* (enclosing stones) and by means of *yajuṣmatī* bricks, he attains his days, half-months, months and seasons; and by means of the *lokampṛṇās*, he attains the *muhūrtas*.

**11.** Those very *pariśrits* which enable him to attain the night regions are themselves the representatives of the nights and they are sixty and three hundred. Because there are three hundred and sixty nights for a year. Twenty-one out of them, he lays around the *Gārhapatya*-altar; two less than eighty around the Dhiṣṇyā hearths and two hundred and sixty-one around the Āhavanīya.

**12.** Then the *yajuṣmatī* bricks (are laid down as follows) – the fistfull of *darbha* grass, the *logeṣṭakās* (four); the lotus-leaf, the gold-plate and the gold man, the two *sruks* (offering spoons), the naturally perforated brick, the *dūrva* brick; the *dviyajūs* brick, the two *retassicās*; one *viśvajyoti*, two *ṛtavyā* (seasonal) bricks, the *aṣāḍha*; the tortoise, the mortar and pestle, the *ukhā*, the five *paśuśirsas* (heads of animals); fifteen *apasyās*, five *chandasyās*; and fifty *prāṇabhṛtas* – all together ninety-eight constitute the first layer.

**13.** Now the second layer (consists of) five *āśvin* bricks; two *ṛtavyās* (seasonal bricks), five *vaiśvadevyā* bricks, five *prāṇabhṛtas*; five *apasyās* and nineteen *vayasyās* – these forty-one form the second layer.

**14.** Now the third – the (one) naturally perforated brick; five *diśyās* (regional bricks); one *viśvajyoti*, four *ṛtavyās*, ten *prāṇabhṛtas*; thirty-six *chandasyās* and fourteen *vālakhilyas*. These seventy-one form the third layer.

**15.** Now the fourth – eighteen *prathma* (*stoma* bricks); then twelve (made of ten *spṛtas* and two *ṛtavyās*) then (*Śṛṣṭis*) seventeen totalling forty-seven constitute the fourth layer.

अथ पञ्चमी पञ्चासपत्नाश्चत्वारिंशद्विराज एकया न त्रिंशत्स्तोमभागाः पञ्च नाकसदः पञ्च पञ्चचूला एकत्रिंशच्छन्दस्या अष्टौ गार्हपत्या चितिरष्टौ पुनश्चितिर्ऋतव्ये विश्वज्योतिर्विकर्णी च स्वयमातृण्णा चाश्मा पृश्निर्यश्चिते5ग्निर्निधीयते ता अष्टात्रिंशं शतं पञ्चमी चितिः॥१६॥

ताः सर्वाः पञ्चभिर्न चत्वारि शतानि ततो याः षष्टिश्च त्रीणि च शतान्यहर्लोकास्ता अह्नामेव सात्तिः क्रियते5ह्नां प्रतिमा ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहान्यथ याः षट्त्रिंशत्पुरीषं तासां षट्त्रिंशी ततो याश्चतुर्विंशतिरर्धमासलोकास्ता अर्धमासानामेव सात्तिः क्रियते5र्धमासानां प्रतिमाथ या द्वादशमासलोकास्ता मासानामेव सात्तिः क्रियते मासानां प्रतिमा ता उ द्वे-द्वे सहर्तुलोका ऋतूनामशून्यताया अथ या लोकंपृणा मुहूर्तलोकास्ता मुहूर्तानामेव सात्तिः क्रियते मुहूर्तानां प्रतिमा ता दश च सहस्राण्यष्टौ च शतानि भवन्त्येतावन्तो हि संवत्सरस्य मुहूर्तास्तासामेकविंशतिं गार्हपत्य उपदधाति द्वाभ्यां नाशीतिं धिष्ण्येष्वाहवनीय इतरा एतावन्ति वै संवत्सरस्य रूपाणि तान्यस्यात्रासान्युपहितानि भवन्ति॥१७॥

तद्धैक आहवनीय एवैतां संपदमापिपयिषन्त्यन्ये वा एते5ग्नयश्चिताः किमन्यत्रोपहिता इह संपश्येमेति न तथा कुर्याद्दश वा एतानग्नींश्चिनुते5ष्टौ धिष्ण्यानाहवनीयं च गार्हपत्यं च तस्मादाहुर्विराळग्निरिति दशाक्षरा हि विराट् तान्नु सर्वानिकमिवैवाचक्षते5ग्निरित्येतस्य ह्येवैतानि सर्वाणि रूपाणि यथा संवत्सरस्याहोरात्राण्यर्धमासा मासा ऋतव एवमस्यैतानि सर्वाणि रूपाणि॥१८॥

ते ये ह तथा कुर्वन्त्येतानि हास्य ते रूपाणि बहिर्धा कुर्वन्त्यथो पापवस्यसं कुर्वन्ति क्षत्राय

**16.** Then the fifth-five *asapatnās*; forty *virāj* bricks; twenty-nine *stomabhāgās*, five *nākasadas*; five *pañcacūḍās*, thirty-one *chandasyā* bricks; eight *gārhapatyas*, eight *punaścitis*; two *ṛtavyās*; one *viśvajyoti*; *vikarṇī*; one naturally perforated brick; the *aśmā* with spots and the fire placed on the altar; these are hundred and thirty-eight constituting the fifth layer.

**17.** All these together make five short of four hundred. Of these, three hundred and sixty, supplying the place of days, are the ones by which the days are obtained. They are the replicas of the days. There are three hundred and sixty of them, corresponding to three hundred and sixty days in the year. For the thirty-six (additional days of intercalary months), the *Purīṣa* (loose soil) is the thirty-sixth. Twenty-four of them supply the place of half-months and are the ones by which the half-months are obtained. They are the replicas of the half-months. The remaining twelve supply the place of months and are the ones by which the months are obtained. They are the replicas of the months. Then to avoid any vacancy in the place of the seasons, these twelve (representing the months) by two and two (six pairs) provide the place of the seasons. And then the *lokaṁpṛṇās* (space filling bricks), supply the place of *muhūrta* and are the ones by which the *muhūrtas* are obtained. They are the replicas of the *muhūrtas*. There are ten thousand-eight hundred of them, for there are so many *muhūrtas* in the year. Out of these, twenty one (*lokaṁpṛṇās*), he lays down in *Gārhapatya*, and seventy-eight in the Dhiṣṇyā hearths. The remaining in Āhavanīya. This much is the form of the year. They are obtained and laid down here.

**18.** Now, there are some who want to get this total (of 10,800 *lokaṁpṛṇās*) in the Āhavanīya itself. Their logic is that those fire-altars are different and why should we have those (bricks of the Gārhapatya and Dhiṣṇyās) taken into account here (in Āhavanīya)? One should not do so. Actually he is building up ten fire-altars — eight Dhiṣṇyā hearths; the Āhavanīya and the Gārhapatya. That is why, *Agni*-altar is (collectively) called Virāḍ and there are ten syllables in the Virāḍ metre. All these (ten altars) are indeed referred to as one *Agni*-altar. These are all (only) the forms of that (Agni). Just as days and nights, half-months, months and seasons are but the forms of the year, these (ten altars) are the forms of the (single) *Agni*-altar.

**19.** Those who do as above (excluding the bricks of Gārhapatya and Dhiṣṇyā hearths) are really keeping out those forms of his (*Agni*-altar) and create confusion. They create discord and rivalry between the Kṣatra and

विशं प्रतिप्रतिनीं प्रत्युद्यामिनीमाग्नीध्रिये वा अश्मानं पृश्निमुपदधात्यथ तꣳ संपश्यति किमु तꣳ संपश्यन्नितरा न संपश्येद्येनैव निर्ऋतिं पाप्मानमपहते स एकादशः॥१९॥

तदाहुः कथमु ता अत्र न संपश्यतीति न ह्येना अभिजुहोत्याहुत्या वा इष्टका सर्वा कृत्स्ना भवतीति॥२०॥

तदाहुः कथमस्यैता अनतिरिक्ता उपहिता भवन्तीति वीर्यं वा अस्यैता अनतिरिक्तं वै पुरुषं वीर्यꣳ स ह वा एतꣳ सर्वं कृत्स्नं प्रजापतिꣳ सꣳस्करोति य एवं विद्वानेतत्कर्म कुरुते यो वै तदेवं वेद॥२१॥इति तृतीयं ब्राह्मणम्॥

## चतुर्थं ब्राह्मणम्

प्रजापतिं वै प्रजाः सृजमानं पाप्मा मृत्युरभिपरिजघान स तपोऽतप्यत सहस्रꣳसंवत्सरान्पाप्मानं विजिहासन्॥१॥

तस्य तपस्तेपानस्यैभ्यो लोमगर्तेभ्य ऊर्ध्वानि ज्योतीꣳष्यायꣳस्तद्यानि तानि ज्योतीꣳष्येतानि तानि नक्षत्राणि यावन्त्येतानि नक्षत्राणि तावन्तो लोमगर्ता यावन्तो लोमगर्तास्तावन्तः सहस्रसंवत्सरस्य मुहूर्ताः॥२॥

स सहस्रतमे संवत्सरे सर्वोऽत्यपवत स यः सोऽत्यपवतायमेव स वायुर्योऽयं पवतेऽथ यं तं पाप्मानमत्यपवतेदं तच्छरीरं क उ तस्मै मनुष्यो यः सहस्रसंवत्सरमवरुन्धीत विद्यया ह वा एवं-वित्सहस्रसंवत्सरमवरुन्धे॥३॥

सर्वा एवैता इष्टकाः साहस्रीरुपासीत रात्रिसहस्रेण रात्रि सहस्रेणैकैकां परिश्रितꣳ संपन्नामुपासीताहः सहस्रेणाहः सहस्रेणैकैकामहर्भाजमर्धमाससहस्रेणार्धमाससहस्रेणैकैकामर्धमासभाजं माससहस्रेण माससहस्रेणैकैकां मासभाजमृतुसहस्रेणर्तुसहस्रेणैकैकामृतुभाजं मुहूर्तसहस्रेण मुहूर्तसहस्रेणैकैकां

the Viś (nobility and peasantry). Surely, on the Āgnīdhrīya hearth he places the spotted stone and takes it into account. Why then he should not take others into account? That (altar) by which they ward off Nirṛti, the evil, is the eleventh.

20. Regarding this they ask, "Why then, they do not take into account here those (bricks of the Nirṛti altar)?" That is because, he makes no offering on them. Only by offering, a brick becomes whole and complete.

21. Now they ask, "How are these (bricks) laid down without becoming excessive?" These (bricks) are his (*Agni*-altar's) strength and man's strength is never excessive. Thus whosoever knowing this, performs this holy rite, or he who only knows this, fashions this Prajāpati wholly and in entirety. (Third Brāhmaṇa Ends.)

## BRĀHMAṆA IV

1. Prajāpati, while creating the creatures was attached all around by the sinful Mṛtyu (death). He observed *tapas* (austerities) for one thousand years, hoping to get rid of that evil.

2. While practising *tapas*, flames shooted up from the pores of his hairs and those flames are those stars. As many stars there are, he has so many pores of hair and as many pores of hairs he has, so many are the *muhūrtas* of (a sacrifice) lasting for thousand years.

3. He on the thousandth year, cleansed himself and that (by which) he cleansed himself is that Vāyu which blows and cleanses. That evil which was cleansed (removed) is this body. But who is the human being capable of keeping on (his body) for thousand years (since man's life is only hundered years). It is by Vidyā that one who knows it is capable of holding on for thousand years.

4. One should consider (or worship) all these bricks as thousandfold. Each of the *pariśrits* (enclosing stones) should be considered as containing (equivalent to) thousand nights; each (of the 360 *yajuṣmatīs*) that holds the day to be considered as containing thousand days; each (of the twenty-four *yajuṣamatīs* out of the remaining 36) that holds the days as having thou-

मुहूर्तभाजः संवत्सरसहस्रेण संवत्सरं ते य एतमेवमग्निः संवत्सरेण संपन्न[४] विदुःसहस्रतमीः हास्य ते कलां विदुरथ य एनमेवं न विदुर्न हास्य ते सहस्रतमीं च न कलां विदुरथ य एवैवं वेद यो वै तत्कर्म कुरुते स हैवैतः सर्वं कृत्स्नं प्राजापत्यमग्निमाप्नोति यं प्रजापतिराप्नोत्तस्मादेवंवित्तप एव तप्येत यदु ह वा एवंवित्तपस्तप्यत[५] आ मैथुनात्सर्वः हास्य तत्स्वर्गं लोकमभि संभवति॥४॥

तदेतदृचाभ्युक्तं न मृषा श्रान्तं यदवन्ति देवा इति न हैवैवं विदुषः किञ्चन मृषा श्रान्तं भवति तथो हास्यैतत्सर्वं देवा अवन्ति॥५॥ इति चतुर्थं ब्राह्मणम्॥

## पञ्चमं ब्राह्मणम्

अथादेशा उपनिषदां वायुरग्निरिति ह शाकायनिन उपासत आदित्योऽग्निरित्यु हैक आहुरथ ह स्माह श्रौमत्यो वा हालिङ्गवो वा वायुरेवाग्निस्तस्माद्यदेवाध्वर्यु[१] रुत्तमं कर्म करोत्यथैतमेवाप्येतीति शाट्यायनिरु हस्माह संवत्सर एवाग्निस्तस्य वसन्तः शिरो ग्रीष्मो दक्षिणः पक्षो वर्षा उत्तरः शरदृतुर्मध्यमात्मा हैमन्त[२] शिशिरावृतू पुच्छं प्रतिष्ठा वागग्निः प्राणो वायुश्चक्षुरादित्यो मनश्चन्द्रमाः श्रोत्रं दिश आपो मिथुनं तपः प्रतिष्ठा मासाः पर्वाण्यर्धमासा नाड्योऽहोरात्राणि रजतसुवर्णानि पत्राणि स एवं देवानप्येतीति संवत्सरोऽग्निरित्यु हैव विद्यादेतन्मयो भवतीति त्वेव विद्याच्चेलक उ ह स्माह शाण्डिल्यायन इम एव लोकास्तिस्रः

४. संसन्नं TE,V1
५. तप एव तप्यत MD
१. यदेवाध्वर्यु MD
२. हेमन्त MD

sand days; each (of the twelve remaining *yajuṣmatīs*) that holds the month as having thousand months; each pair of the twelve (*yajuṣmatīs*) that holds the seasons as containing one thousand seasons; and each (of the *lokaṁpṛṇās*) that holds one *muhūrta* as containing thousand *muhūrtas*. The year itself should be considered as containing thousand years. Whoever knows thus the *Agni*-altar as containing the year, he knows the thousandth *kalā* (unit) of his (*Agni*-altar) and he who does not know him thus, does not know even one thousandth *kalā* (unit) of *Agni*-altar. But he who knows this or who performs this sacred rite, obtains this whole and entire Prajāpati, *Agni*-altar whom Prajāpati (himself) obtained. So he who knows thus should undergo *tapas* (austerity). Indeed when he who knows this practises *tapas* (abstinence) upto sexual intercourse, every part of his comes to share that heavenly world.

**5.** This is what has been explained in the *Ṛk* (stanza) – "It is for nothing that the gods favour the tired (one who is emaciated by *tapas*)" (meaning) the efforts of one who knows thus do not go in vain; (as a reward) for that the gods safeguard all his (actions or all his parts). (Fourth Brāhmaṇa Ends.)

**BRĀHMAṆA V**

**1.** Now (we deal with) the injunctions contained in the Upaniṣads – the Śākāyanin consider *Agni*-altar as Vāyu. But some others say that Agni is Āditya (sun). Perhaps Śraumatya or Hāliṅgava it was who said that Agni is, no doubt, Vāyu and that is why, when the Adhvaryu performs the final rite he (as sacrifice personified) enters into that (Vāyu). Śāṭyāyani is of the view that *Agni*-altar is the year itself; the spring is his head, the summer is his right wing, the rainy season, his left wing; the autumn season is his middle body (trunk) and the dewy season and winter are his tail that supports. Agni (fire) is his speech, Vāyu is his *prāṇa*, Āditya is his eye; moon is his mind, the quarters are his ear, waters are his mate, *tapas* is his foundation; the months are his joints, the half-months are the veins; the days and nights are his golden and silver feathers. Thus he joins the gods. So the year itself is to be understood as *Agni*-altar. One should know that he becomes of that (year's) form. Celaka, Śāṇḍilyāyana said, "These three worlds are the layers made of naturally perforated bricks and the Yajamāna constitutes the

स्वयमातृण्णवत्यश्चितयो यजमानश्चतुर्थी सर्वे कामाः पञ्चमीमाꣳश्च लोकान्त्सꣳस्कुर्व आत्मानं च सर्वाꣳश्च कामानित्येवं विद्यादिति॥१॥इति पञ्चमं ब्राह्मणम्॥

॥ इति चतुर्थोऽध्यायः ॥

fourth layer. All objects he wishes for, form the fifth layer. One should know thus, that he (*Agni*-altar) is fashioned by means of these worlds, his own self and all his desired objects. (Fifth Brāhmaṇa Ends.)

**(Chapter Four Ends.)**

# पञ्चमोऽध्यायः

## प्रथमं ब्राह्मणम्

तस्य वा एतस्याग्नेर्वागेवोपनिषद्वाचा हि चीयत ऋचा यजुषा साम्नेति नु दैव्याथ यन्मानुष्या वाचा हेतीदं कुरुतेतीदं कुरुतेति तदु ह तया चीयते॥१॥

सा वा एषा वाक्त्रेधा विहितर्चो[1] यजूꣳषि सामानि तेनाग्निस्त्रेधा विहित एतेन हि त्रयेण चीयतेऽप्यहैवं त्रेधा विहित इत्थꣳ ह त्वेवापि त्रेधा विहितो यदस्मिꣳस्त्रेधा विहिता इष्टका उपधीयन्ते पुन्नाम्न्यः स्त्रीनाम्न्यो नपुꣳसकनाम्न्यस्त्रेधाविहितान्यु एवेमानि पुरुषस्याङ्गानि पुन्नामानि स्त्रीनामानि नपुꣳ सकनामानि॥२॥

सोऽयमात्मा त्रेधा विहित एव सोऽनेन त्रेधा विहितेनात्मनैतं त्रेधा विहितं दैवममृतमाप्नोति ता उ सर्वा इष्टका इत्येवाचक्षते नेष्टक इति नेष्टकमिति वाचो रूपेण वाग्घ्येवैतत्सर्वं यत्स्त्री पुमान्नपुꣳसकं वाचा ह्येवैतत्सर्वमाप्तं तस्मादेना अङ्गिरस्वद्ध्रुवासीदेत्येव सर्वाः सादयति नाङ्गिरस्वद्ध्रुवꣳ सीदेति नाङ्गिरस्वद्ध्रुवꣳ सीदेति वाचꣳ ह्येवैताꣳ सꣳस्कुरुते॥३॥

सा या सा वागसौ स आदित्यः स एष मृत्युस्तद्यत्किञ्चार्वाचीनमादित्यात्सर्वं तन्मृत्युनाप्तꣳ स यो हैनमतोऽर्वाचीनं चिनुते मृत्युना हैनꣳ स आप्तं चिनुते मृत्यवे ह स आत्मानमपिदधात्यथ य एनमत ऊर्ध्वं चिनुते स पुनर्मृत्युमपजयति विद्यया ह वा अस्यैषोऽत ऊर्ध्वं चितो भवति॥४॥

सा वा एषा वाक्त्रेधा विहिता ऋचो यजूꣳषि सामानि मण्डलमेवर्चोऽर्चिः सामानि पुरुषो यजूꣳष्यथैतदमृतं यदेतदर्चिर्दीप्यत इदं तत्पुष्करपर्णं तद्यत्पुष्करपर्णमुपधायाग्निं

१. विदिता त्रदचो TE

## Chapter Five

### BRĀHMAṆA I

**1.** The secret import of this Agni is, doubtless, the speech. It is indeed fashioned by means of speech; namely, by *Ṛks, Yajus* formulas and *Sāmans* which are of divine nature. When he (Adhvaryu) employs herein speech (in the course of the *cayana*) like "do this, do this", that (speech) also goes into the building up of the altar (so both divine and human speech are employed in fashioning it).

**2.** This speech is found three-fold; namely the *Ṛks*, the *Yajus mantras* and the *Sāmans*. By these he is fashioned (in a) threefold manner. It is threefold even for this reason, namely, that three types of bricks are laid down in it. They are with masculine names, with feminine names and with neuter names. Indeed the limbs of this human form are also threefold, with masculine, feminine and neuter names.

**3.** This body is made up of threefold and with this threefold body he obtains this threefold laid god (*Agni*-altar) which is immortal. All these are called *iṣṭakā* (brick in feminine) and not as *iṣṭakaḥ* (in masculine) or *iṣṭakam* (in neuter) when referred to in speech. All these, namely feminine, masculine and neuter, are speech. Everything is achieved by means of speech; that is why, all these (bricks) are placed by saying (the *mantra*) "Lie thou firm like Aṅgiras" (where *dhruvā* is feminine). He does not say *dhruvaḥ* (in masculine) steady like Aṅgiras or *dhruvam* (in neuter) steady like Aṅgiras. For it is that speech (in feminine) which fashions it (the altar).

**4.** Now this speech is yonder sun and this one (the fire-altar) is Mṛtyu (death). Therefore whatever is on this side of the sun is devoured by Mṛtyu. When one builds it (altar) up on this side of the sun, builds it as one possessed by death and thereby submits himself to death. He who builds it up above (on the other side of the sun), he conquers death. It is by means of knowledge that the other is built above (the sun).

**5.** This speech is divided into threefold, namely *Ṛks, Yajus* and *Sāmans*. The orb is the *Ṛks*; the flames are the *Sāmans* and the man (in the sun) is

चिनोत्येतस्मिन्नेवैतदमृत ऋङ्मयं यजुर्मयꣳ साममयमात्मानꣳ सꣳस्कुरुते सोऽमृतो भवति॥५॥इति प्रथमं ब्राह्मणम्॥

## द्वितीयं ब्राह्मणम्

यदेतन्मण्डलं तपति तन्महदुक्थं ता ऋचः स ऋचां लोकोऽथ यदेतदर्चिर्दीप्यते तन्महाव्रतं तानि सामानि साम्नां लोकोऽथ य एष एतस्मिन्मण्डले पुरुषः सोऽग्निस्तानि यजूꣳषि स यजुषां लोकः सैषा त्रैय्येव विद्या तपति तद्धैतदप्यविद्वाꣳस आहुस्त्रयी वा एषा विद्या तपतीति वाग्घैव[1] तत्पश्यन्ती वदति॥१॥

स एष एव मृत्युर्य एष एतस्मिन्मण्डले पुरुषोऽथैतदमृतं यदेतदर्चिर्दीप्यते तस्मान्मृत्युर्न म्रियतेऽमृते ह्यन्तस्तस्मादु न दृश्यतेऽमृते ह्यन्तः॥२॥

तदेष श्लोको भवत्यन्तरं मृत्योरमृतमित्यवरꣳ ह्येतन्मृत्योरमृतं मृत्यावमृतमाहितमित्येतस्मिन्हि पुरुष एतन्मण्डलं प्रतिष्ठितं तपति मृत्युर्विवस्वन्तं वस्त इत्यसौ वा आदित्यो विवस्वानेष ह्यहोरात्रे विवस्ते तमेष वस्ते सर्वतो ह्येनेन परिवृतो मृत्योरात्मा विवस्वतीत्येतस्मिन्हि मण्डल एतस्य पुरुषस्यात्मैतदेष श्लोको भवति॥३॥

तयोर्वा एतयोरुभयोरेतस्य चार्चिष एतस्य च पुरुषस्यैतन्मण्डलं प्रतिष्ठा तस्मान्महदुक्थं परस्मै न शꣳसेन्नेदेतां प्रतिष्ठां छिनदा इत्येताꣳ ह स प्रतिष्ठां छिन्ते यो महदुक्थं परस्मै शꣳसति तस्मादुक्थशसं भूयिष्ठं परिचक्षते प्रतिष्ठाच्छिन्नो[2] हि भवतीत्यधिदेवतम्॥४॥

अथाधियज्ञं यदेतन्मण्डलं तपत्ययꣳ स रुक्मोऽथ यदेतदर्चिर्दीप्यत इदं तत्पुष्करपर्णमापो

१. वाग्वैव TE, H
२. प्रतिष्ठां छिन्नो TE, My

the *Yajus mantras*. That which is the immortal principle of it, is this lotus leaf. Thus when he builds up the fire-altar after placing the lotus leaf, he is actually building up a body for himself made of *Ṛks, Yajus* and *Sāmans* on that immortal principle and becomes (himself) immortal. (First Brāhmaṇa Ends.)

**BRĀHMAṆA II**

**1.** That orb which shines is the *Mahad Uktha* constituted of *Ṛk* chants; that glowing flame is the Mahāvrata, made of the great *Sāman* hymns and this is the world of the *Sāman*. The Puruṣa in that orb is fire and the *Yajus* formulas constitute that and that is the world of *Yajus*. Thus it is the triple *vidyā* (*Trayī*) that is burning. Even those who do not know thus, nevertheless say, "This threefold lore does shine" for it is the *paśyantī vāk* (the manifest speech) which says so.

**2.** That Puruṣa who is in that orb (of the sun) is indeed death (Mṛtyu) and the flame or glow that shines is the immortal principle. That is why, death does not die, for he (Mṛtyu) is enclosed in the immortal. That is also why he (Mṛtyu) is not to be seen; because he is within the immortal.

**3.** There is this verse (in respect of that) "Mṛtyu within (the immortal) is itself immortal" (because it is protected from the mortal world outside the orb). Because the immortal principle is below the mortal one (in the sun) and the immortal is covering the mortal; since based on this Puruṣa; the immortal orb is blazing forth. "Death puts on the Vivasvān (the radiant)." The radiant one is indeed the sun. It is him (the radiant orb) that he (Puruṣa) puts on (covers himself with). Because he (Puruṣa) is covered on every side with him (the immortal radiant orb). "Death's self is in the radiant", for the body of that Puruṣa is indeed in that orb (of the sun). This is what that verse is (saying).

**4.** This orb is the foothold of those two; namely of that radiance and of that Puruṣa. Therefore the *Mahad Uktha* should not be recited for another, lest it should cut away, that foothold of his by being recited for someone else. That is the reason why a (professional) singer of *śastras* is condemned; for, he is cut off from his foothold. This is as far as the divine aspect is concerned.

**5.** Now the sacrificial aspect – that orb which is shining is this gold plate (on the altar) and that glow (of the sun's orb) is that lotus leaf. Those are

ह्येताः आपः पुष्करपर्णमथ य एष एतस्मिन्मण्डले पुरुषोऽयमेव स योऽयꣳ हिरण्यमयः पुरुषस्तदेतदेवैतत्त्रयꣳ सꣳस्कृत्येहोपधत्ते तद्यज्ञस्यैवानु सꣳस्थामूर्ध्वमुत्क्रामति तदेतमप्येति य एष तपति तस्मादग्निं नाद्रियेत परिहन्तुममुत्र ह्येष तदा भवतीत्यु एवाधियज्ञम्॥५॥

अथाध्यात्मं यदेतन्मण्डलं तपति यश्चैष रुक्म इदं तच्छुक्लमक्षन्नथ यदेतदर्चिर्दीप्यते यच्चैतत्पुष्करपर्णमिदं तत्कृष्णमक्षन्नथ य एष एतस्मिन्मण्डले पुरुषो यश्चैष हिरण्मयः पुरुषोऽयमेव स योऽयं दक्षिणेऽक्षन्पुरुषः॥६॥

स एष एव लोकम्पृणा तामेष सर्वोऽग्निरभिसंपद्यते तस्यै तन्मिथुनं योऽयꣳ सव्येऽक्षन्पुरुषोऽर्धमु हैतदात्मनो यन्मिथुनं यदा वै सह मिथुनेनाथ सर्वोऽथ कृत्स्नः कृत्स्नतायै तद्यत्ते द्वे भवतो द्वन्द्वꣳ हि मिथुनं प्रजननं तस्माद्वे द्वे लोकम्पृणे उपधीयेते तस्मादु द्वाभ्यां चितिं प्रणयन्ति॥७॥

स एष एवेन्द्रो योऽयं दक्षिणेऽक्षन्पुरुषोऽथेयमिन्द्राणी ताभ्यां देवा एतां विधृतिमकुर्वन्नासिकां तस्माज्जायाया अन्ते नाश्नीयाद्वीर्यवान्हास्माज्जायते वीर्यवन्तमु ह सा जनयति यस्या अन्ते नाश्नाति॥८॥

तदेतद्देवव्रतꣳराजन्यबन्धवो मनुष्याणामनुतमां गोपायन्ति तस्मादु तेषु वीर्यवान्जायतेऽमृतवाका वयसाꣳ सा क्षिप्रश्येनं जनयति तौ हृदयस्याकाशं प्रत्यवेत्य मिथुनीभवतस्तौ यदा मिथुनस्यान्तं गच्छतोऽथ हैतत्पुरुषः स्वपिति तद्यथा हैवेदं मानुषस्य मिथुनस्यान्तं गत्वासंविद-इव भवत्येवꣳ हैवैतदसंविद-इव भवति दैवꣳ ह्येतन्मिथुनं परमो ह्येष आनन्दस्तस्मादेवं वित्स्वप्याल्लोक्यꣳ हैते-एव तद्देवते मिथुनेन प्रियेण धाम्ना समर्धयति तस्मादु ह स्वपन्तं धुरेव न बोधयेन्नेदेते

waters (the effulgence of the sun are conceived as waters) and the lotus leaf is water. That Puruṣa in the sun's orb is the same as this gold man (in the altar). Thus he fashions these three and constructs that (two) which at the completion of the sacrifice rises upwards and enters that one (sun) who burns yonder. So one need not worry about the *Agni*-altar (need not mind destroying the altar after the sacrifice) because by then he is in that yonder sun. This is as far as the sacrificial aspect is concerned.

**6.** Now with regard to the physical aspect – that burning orb and this golden plate (on the altar) are the same as the white portion of the eye. That glow (of the sun's orb) and this lotus leaf (on the altar) are the same as this black portion of the eye. That human figure in the sun's orb and this gold man (on the altar) are the same as this man in the right eye.

**7.** The *lokaṁpṛṇā* bricks are the same as the Puruṣa (in the sun's orbit). Depending on that *lokaṁpṛṇā* (in the form of sun) the entire *Agni*-altar is made. For him (the Puruṣa in the right eye) the Puruṣa in the left eye is the mate. That which is the mate is one half of the self (of the Puruṣa in the right eye); for only when one is with a mate, he is whole and complete; thus the second (in the left eye) is for the sake of completeness. Now they are two of them. A pair means a productive couple and that is why, *lokaṁpṛṇās* are laid down in pairs each time. (Virtually) they construct the layer with two (kinds of bricks, one male and the other female forming a couple).

**8.** This Puruṣa in the right eye is indeed Indra and this (in the left eye) is Indrāṇī. It is for the sake of these two, the gods made a partition between the two eyes (in the form of) the nose; so that he (the husband) would not eat food in the presence of his wife. A powerful offspring is indeed born out of that. She gives birth to a powerful child in whose proximity (he) does not eat.

**9.** This is what is ordained by gods – among humans, the princely males keep themselves far away (from their mates while eating) and hence it is that vigorous son is born of them. Among the birds (the variety called) Amṛtavāka (eats food away from its mate) and gives birth to Kṣipraśyenī (the eagle that flies very fast). These two (Puruṣas) of the eyes enter into the space of the heart (Daharākāśa) and enter into union. When they reach the end of cohabitation, then this man sleeps. Even as here (in daily life)

देवते मिथुनीभवन्त्यौ हिनसानीति तस्मादु हैतत्सुषुपुषः श्लेष्मणमिव मुखं भवत्येते एव तद्देवते रेतः सिञ्चतस्तस्माद्रेतस इदꣳ सर्वꣳ संभवति यदिदं किञ्च॥९॥

स एष एव मृत्युर्य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषस्तस्य हैतस्य हृदये पादावतिहतौ तौ हैतदाच्छिद्योत्क्रामति स यदोत्क्रामत्यथ हैतत्पुरुषो म्रियते तस्मादु हैतत्प्रेतमाहुराच्छेद्यस्येत्येष उ एव प्राण एष हीमाः सर्वाः प्रजाः प्रणयति तस्यैते प्राणाः स्वाः स यदा स्वपित्यथैनमेते प्राणाः स्वा अपियन्ति तस्मात्स्वाप्ययः स्वाप्ययो ह वै तꣳ स्वप्न इत्याचक्षते परोऽक्षं परोक्षकामा हि देवाः॥१०॥

स एतैः सुप्तो न कस्यचन वेद न मनसा संकल्पयति न वाचान्नस्य रसं विजानाति न प्राणेन गन्धं विजानाति न चक्षुषा पश्यति न श्रोत्रेण शृणोत्येतꣳ ह्येते तदापीता भवन्ति स एष एकः सन्प्रजासु बहुधा व्याविष्टस्तस्मादेका सती लोकम्पृणा सर्वमग्निमनुविभवत्यथ यदेक एव तस्मादेका॥११॥

तदाहुरेको मृत्युर्बहवा३ इत्येकश्च बहवश्चेति ह ब्रूयाद्यदहासावमुत्र तेनैकोऽथ यदिह प्रजासु बहुधा व्याविष्टस्तेनो बहवः॥१२॥

on reaching the culminatinon of a human union, he becomes insensible (unconscious) as it were, so does he (the Akṣipuruṣa) become unconscious, as it were, for this is a divine union and the bliss (that he experiences) is supreme. Therefore, he who knows this goes to sleep, for it is heavenly (bliss). By doing so, he makes these two deities (the Akṣipuruṣas) enjoy their union and achieve their desired state. That is why, one should not forcibly awaken a person asleep, lest he should harm these deities engaged in union. That is why, the mouth of the one who has been sleeping is viscous (pasty), as it were. Because these two deities are shedding seeds (due to union in sleep) and from that seed everything here originates, whatsoever exists.

**10.** Now that Puruṣa in the (sun's) orb and that Puruṣa in the right eye are indeed death. His feet are struck deep in the heart and having pulled them out, he comes forth and when he emerges then that man dies. That is why, they say of a man who dies as having been cut off. He is indeed the *prāṇas* and it is he who leads forward (motivates) all these creatures. These *prāṇas* are his own (*svā*) and when he sleeps, these *prāṇas* take charge of him (*svā-apīyanta*) as their own. That is why, it is termed *Svāpyaya* (being taken possession of by one's own people). *Svāpyaya* is what is mystically called *svapna* (sleep) for, the gods like mystic terminology.

**11.** When he (Puruṣa) sleeps along with these *prāṇas* he does not know of anything; he does not resolve with his mind, nor he recognises the taste of food with his tongue; nor by his breath identifies smell, nor sees with his eyes; nor hears with his ears; at that time all these (*prāṇas*) are merged in him (the man in the sun or in the eye). Whilst being only one, he (the Puruṣa) is numerously distributed among living beings. That is why, the *lokaṁpṛṇā* (representing the Puruṣa in the sun); though only one (in kind) pervades the whole altar. Because the Puruṣa is only one, (the *lokaṁpṛṇā*) is also one.

**12.** Now they raise the question, "Is Mṛtyu only one or many?" It has to be answered, "Both one and many." In as much as he is that (Puruṣa in the sun) in yonder world, he is one and in as much as he is manifold manifested here among the creatures, he is also many.

तदाहुरन्तिके मृत्युर्दूरा इत्यन्तिके च दूरे चेति ह ब्रूयाद्यदहायमिहाध्यात्मं तेनान्तिकेऽथ यदसावमुत्र तेनो दूरे॥१३॥

तदेष श्लोको भवत्यन्ने भात्यपाश्रितो रसानाꣳ संक्षरेऽमृत इति यदेतन्मण्डलं तपति तदन्नमथ य एष एतस्मिन्मण्डले पुरुषः सोऽत्ता स एतस्मिन्नन्नेऽपश्रितो भातीत्यधिदेवतम्॥१४॥

अथाध्यात्ममिदमेव शरीरमन्नमथ योऽयं दक्षिणेऽक्षन्पुरुषः सोऽत्ता स एतस्मिन्नन्नेऽपश्रितो भाति॥१५॥

तमेतमग्निरित्यध्वर्यव उपासते यजुरित्येष हीदꣳ सर्वं युनक्ति सामेति छन्दोगा एतस्मिन्हीदꣳ सर्वꣳ समानमुक्थमिति बह्वृचा एष हीदꣳ सर्वमुत्थापयति यातुरिति यातुविद एतेन हीदꣳ सर्वं यतं विषमिति सर्पाः सर्प इति सर्पविद ऊर्गिति देवा रयिरिति मनुष्या मायेत्यसुराः स्वधेति पितरो देवजन इति देवजनविदो रूपमिति गन्धर्वा गन्ध इत्यप्सरसस्तं यथा-यथोपासते तदेव भवति तद्धैनां भूत्वावति तस्मादे- नमेवंवित्सर्वैरेवैतैरुपासीत सर्वꣳ हैतद्भवति सर्वꣳ हैनमेतद्भूत्वावति॥१६॥

स एष त्रीष्टकोऽग्निर्ऋगेका यजुरेका सामैका तद्यां कां चात्रर्चोपदधाति रुक्म एव तस्या आयतनमथ यां यजुषा पुरुष एव तस्या आयतनमथ याꣳ साम्ना पुष्करपर्णमेव तस्या आयतनमेवं त्रीष्टकस्ते वा एत उभे एष च रुक्म एतच्च पुष्करपर्णमेतं पुरुषमपीतमुभे ह्यृक्सामे यजुरपीत एवम्वेकेष्टकः॥१७॥

**13.** Now they ask, "Is Mṛtyu near or far away?" The answer is, "Both near and far away." In so far as he is here in the body (of living beings) he is near and since he is that one (in the sun) in the yonder world, he is also far away. There is a verse regarding this (which can be interpreted in two ways as follows) – "This orb (of the sun which is shining is food and the Puruṣa who is in the centre of the orb is the eater and he is shining while concealed in that food." This is the interpretation from the deity point of view.

**14.** Now at the physical level (the interpretation is) – this body itself is food. This Puruṣa in the right eye is the eater. He shines while concealed in this food.

**15.** Him (the Akṣipuruṣa) as well as the Puruṣa in the sun), the Adhvaryus (*Yajurveda* priests) worship as Agni (fire-altar), the *Yajus*. It is he who links up all these (various parts of the sacrifice).

**16.** The *chandogas* (*Sāmaveda* priests) worship him as *Sāman*, because it is in him that all this (creation) is equal; the *Bahvṛcās* (*Ṛgvedic* priests) worship him as *Uktha* because it is he who generates (makes to rise up) all these. Those who are well versed in occult science worship him as *Yātu* (*jātu* meaning sorcery), because everything here held is check by him. The serpents (worship him) as poison; the snake-charmers (worship him) as snakes; the gods (worship him) as energy (essence); the men (worship him) as wealth; the Asuras (worship him) as *māyā* (magic power); the *pitṛs* (worship him) as *svadhā*; those who know about divine beings (worship him) as divine being; the Gandharvas, as beauty; the Apsaras as fragrance – thus under whatever form he serves (the particular class of beings), that form he indeed becomes (for that class) and having assumed that form he protects them. So one who knows him thus should worship him in all these (forms). He becomes all these (for him who worships as all these forms) and having become all he protects him.

**17.** Now in this fire-altar having three (kinds of) bricks, the *Ṛk* constitutes one, the *Yajus* another and the *Sāman* the third. Whatever (brick) he places with a *Ṛk mantra*, it has the gold plate as its base. Whatever (brick) he lays with a *Yajus* formula, it has the gold man as its base and whatever (brick) he places reciting a *Sāman*, has the lotus-leaf for its base. Thus he consists of three bricks. These two, namely this gold plate and the lotus leaf get absorbed in the gold man. (In other words) both *Ṛk* and *Sāman* get absorbed in the *Yajus*. Thus he consists of a single brick.

स एष एव मृत्युर्य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः स एष एवं विद आत्मा भवति स यदैवंविदस्माल्लोकात्प्रैत्यथैतमेवात्मानमभिसंभवति सोऽमृतो भवति मृत्युर्ह्यस्यात्मा भवति॥१८॥इति द्वितीयं ब्राह्मणम्॥

## तृतीयं ब्राह्मणम्

नेव वा इदमग्रेऽसदासीन्नेव सदासीदासीदिव वा इदमग्रे नेवासीत्तद्ध तन्मन एवास॥१॥

तस्मादेतदृषिणाभ्यनूक्तं नासदासीन्नो सदासीत्तदानीमिति नेव हि सन्मनो नेवासत्तदिदं मनः सृष्टमाविरबुभूषन्निरुक्ततरं मूर्ततरं तदात्मानमन्वैच्छत्तत्तपोऽतप्यत तत्प्रामूर्छत्तत्षट्त्रिꣳशतꣳ सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्मनोमयान्मनश्चितस्ते मनसैवाधीयन्त मनसा चीयन्त मनसैषु ग्रहा अगृह्यन्त मनसास्तुवत मनसा शꣳसन्यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञियं कर्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनोमयमक्रियत तद्यत्किञ्चेमानि भूतानि मनसा संकल्पयन्ति तेषामेव सा कृतिस्तानेवादधति ताꣳश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येतावती वै मनसो विभूतिरेतावती विसृष्टिरेतावन्मनः षट्त्रिꣳशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक एव तावान्यावानसौ पूर्वः॥२॥

तन्मनो वाचमसृजत सेयं वाक्सृष्टाविरबुभूषन्निरुक्ततरा मूर्ततरा सात्मानमन्वैच्छत्सा तपोऽतप्यत सा प्रामूर्च्छत्सा षट्त्रिꣳशतꣳ सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्वाङ्मयान्वाक्चितस्ते वाचैवाधीयन्त वाचाचीयन्त वाचैषु ग्रहा अगृह्यन्त वाचास्तुवत वाचाशꣳ सन्यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञियं कर्म वाचैव तेषु तद्वाङ्मयेषु वाक्चित्सु वाङ्मयमक्रियत तद्यत्किञ्चेमानि भूतानि वाचा वदन्ति तेषामेव सा कृतिस्तानेवादधति ताꣳश्चिन्वन्ति तेषु ग्रहान् गृह्णन्ति तेषु

**18.** That Puruṣa in yonder orb (of the sun) and this Puruṣa in the right eye are no other than Mṛtyu and he becomes the self of him who knows this. Whenever he who knows this departs from this world, he is born in that body and becomes immortal because Mṛtyu itself becomes his body. (Second Brāhmaṇa Ends.)

### BRĀHMAṆA III

**1.** In the beginning, this universe was neither existent nor non-existent as it were. In the beginning this universe indeed as it were existed and did not exist. There was then only that mind.

**2.** Therefore it has been said by the *Ṛsi*, "Neither the non-existent was then there nor the existent was there then." The mind was then neither existent nor non-existent. This mind when it was created wanted to manifest itself more defined and more gross. It searched for a self (body for itself). It practiced *tapas* and became prominent. It discovered the thirty-six thousand fire-altars (*vedīs*) for worshipping, which were in the forms of mental ideas (thoughts); built up by mind; established only mentally and fashioned by mind. Mentally the Soma cups were drawn for that; they mentally chanted the *stotras*; mentally they recited *śastras* for them. Whatever rite is done in a sacrifice, all those sacrificial activities were performed mentally on those mentally conceived fires over those mentally conceived *citis* (layers of altar). Whatever these living beings wished for in their minds, that was done in those fires. They set up those hearths; they built up those altars; they drew *Soma* cups in them; they chanted the *stotras* on them, and recited the *śastras*. This much was the expanse of the mind; that much the creation of mind; so great is the mind with thirty-six thousand worshippable fires. Each of these was as great as the previous one.

**3.** That mind created speech. This speech, so created wanted to manifest itself more definitely and in a grosser form. It searched for itself. It practised *tapas* and became distinct. It saw thirty-six thousand *Agni*-altars (*vedīs*) of worship; all in the form of speech and made of *citis* (layers) of speech. They made the hearths by speech; built up the altar by speech; collected the *Soma* cups for them by speech; chanted the *stotras* by speech and recited the *śastras* by speech. Thus whatever rite is performed in a sacrifice and whatever happens to be a sacrificial work, all that was done in those fires in the form of speech, on those layers made up of speech and

स्तुवते तेषु शꣳसन्त्येतावती वै वाचो विभूतिरेतावती विसृष्टिरेतावती वाक्षट्त्रिꣳशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक एव तावान्यावानसौ पूर्वः॥३॥

सा वाक्प्राणमसृजत सोऽयं प्राणः सृष्ट आविरबुभूषन्निरुक्ततरो मूर्ततरः स आत्मानमन्वैच्छत्स तपोऽतप्यत स प्रामूर्च्छत्स षट्त्रिꣳशतꣳ सहस्राण्यपश्यदादात्मनोऽग्नीनर्कान्प्राणमयान्प्राणचितस्ते प्राणेनैवाधीयन्त प्राणेनाचीयन्त प्राणेनैषु ग्रहा अगृह्यन्त प्राणेनास्तुवत प्राणेनाशꣳसन्यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञियं कर्म प्राणेनैव तेषु तत्प्राणमयेषु प्राणचित्सु प्राणमयमक्रियत तद्यत्किञ्चेमानि भूतानि प्राणेन प्राणन्ति तेषामेव साकृतिस्तानेवादधाति ताꣳश्चिन्वन्ति तेषु ग्रहान् गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येतावती वै प्राणस्य विभूतिरेतावती विसृष्टिरेतावान्प्राणः षट्त्रिꣳशत्सहस्राण्यग्रयोऽर्कास्तेषामेकैक एव तावान्यावानसौ पूर्वः॥४॥

स प्राणश्चक्षुरसृजत तदिदं चक्षुः सृष्टमाविरबुभूषन्निरुक्ततरं मूर्ततरं तदात्मानमन्वैच्छत्तत्तपोऽतप्यत तत्प्रामूर्च्छत्तत्षट्त्रिꣳशतꣳ सहस्राण्यपश्यदात्मनोऽग्नीनर्काꣳश्चक्षुर्मयाꣳश्चक्षुश्चितस्ते चक्षुषैवाधीयन्त चक्षुषाचीयन्त चक्षुषैषु ग्रहा अगृह्यन्त चक्षुषास्तुवत चक्षुषाशꣳसन्यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञियं कर्म चक्षुषैव तेषु तच्चक्षुर्मयेषु चक्षुश्चित्सु चक्षुर्मयमक्रियत तद्यत्किञ्चेमानि भूतानि चक्षुषा पश्यन्ति तेषामेव सा कृतिस्तानेवादधति ताꣳश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येतावती वै चक्षुषो विभूतिरेतावती विसृष्टिरेतावच्चक्षुः षट्त्रिꣳशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक एव तावान्यावानसौ पूर्वः॥५॥

performed by speech. Whatever these beings say orally, that action is only of those sayings; he places only those, builds up only that, collects *Soma* cups only in them; chants *stotras* only on them and recites the *śastras* only for them. This much is the expanse of speech and this much its creation; this much speech constitutes thirty-six thousand Agni *vedīs* of worship. Each of them was as great as the previous one.

**4.** That speech produced *prāṇa*; this *prāṇa* so created wanted to manifest itself more definitely and in a grosser form. It searched for itself. It practised *tapas* and became distinct. It saw thirty-six thousand *Agni*-altars (*vedīs*) of worship, all in the form of *prāṇa* and made of *citis* (layers) of *prāṇa*. They made the hearths by *prāṇa*; built up the altar by *prāṇa*; collected the Soma cups for them by *prāṇa*; chanted the *stotras* by *prāṇa* and recited the *śastras* by *prāṇa* – thus whatever rite is performed in a sacrifice and whatever happens to be a sacrificial work all that was done in those fires in the form of *prāṇa* on those layers made up of *prāṇa* and performed by *prāṇa*. Whatever these beings orally say, that action is only of those sayings; he places only those, builds up only that, collects *Soma* cups only in them; chants *stotras* only on them and recites the *śastras* only for them. This much is the expanse of *prāṇa* and this much its creation; this much constitutes thirty-six thousand Agnis (*vedīs*) of worship. Each of them was as great as the previous one.

**5.** That *prāṇa* created the eye; this eye so created wanted to manifest itself more definitely and in a grosser form. It searched for itself. It practised *tapas* and became distinct. It saw thirty-six thousand *Agni*-altars (*vedīs*) of worship, all in the form of eye. They made the hearths by eye; built up the altar by eye; collected the *Soma* cups for them by eye; chanted the *stotras* by eye and recited the *śastras* by eye – thus whatever rite is performed in a sacrifice and whatever happens to be a sacrificial work all that was done in those fires in the form of eye, on those layers made up of eye and performed by eye. Whatever these beings orally say, that action is only of those sayings; he places only those, builds up only that, collects Soma cups only in them; chants *stotras* only on them and recites the *śastras* only for them. This much is the expanse of eye and this much its creation, this much constitutes thirty-six thousand *Agnis* (*vedīs*) of worship. Each of them was as great as the previous one.

तच्चक्षुः श्रोत्रमसृजत तदिदꣳ श्रोत्रꣳ सृष्टमाविरबुभूषन्निरुक्ततरं मूर्ततरं तदात्मानमन्वैच्छत्तत्तपोऽतप्यत तत्प्रामूर्च्छत्तत्षट्त्रिꣳशतꣳ सहस्राण्यपश्यदात्मनोऽग्नीनर्काञ्छ्रोत्रमयाञ्छ्रोत्रचितस्ते श्रोत्रेणैवाधीयन्त श्रोत्रेणाचीयन्त श्रोत्रेणैषु ग्रहा अगृह्यन्त श्रोत्रेणास्तुवत श्रोत्रेणाशꣳसन्यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञियं कर्म श्रोत्रेणैव तेषु तच्छ्रोत्रमयेषु श्रोत्रचित्सु श्रोत्रमयमक्रियत तद्यत्किञ्चेमानि भूतानि श्रोत्रेण शृण्वन्ति तेषामेव सा कृतिस्तानेवादधति ताꣳश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येतावती वै श्रोत्रस्य विभूतिरेतावती विसृष्टिरेतावच्छ्रोत्रꣳ षट्त्रिꣳशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक एव तावान्यावानसौ पूर्वः॥६॥

तच्छ्रोत्रं कर्मासृजत तत्प्राणानभिसममूर्च्छदिमꣳ [1]सन्देहमन्नसन्देहमकृत्स्नं वै कर्मर्ते प्राणेभ्योऽकृत्स्ना उ वै प्राणा ऋते कर्मणस्तदिदं कर्म सृष्टमाविरबुभूषन्निरुक्ततरं मूर्ततरं तदात्मानमन्वैच्छत्तत्तपोऽतप्यत तत्प्रामूर्च्छत्तत्षट्त्रिꣳशतꣳ सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्कर्ममयान्कर्मचितस्ते कर्मणैवाधीयन्त कर्मणाचीयन्त कर्मणैषु ग्रहा अगृह्यन्त कर्मणास्तुवत कर्मणाशꣳसन्यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञियं कर्म कर्मणैव तेषु तत्कर्ममयेषु कर्मचित्सु कर्ममयमक्रियत तद्यत्किञ्चेमानि भूतानि कर्म कुर्वते तेषामेव सा कृतिस्तानेवादधति ताꣳश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येतावती वै कर्मणो विभूतिरेतावती विसृष्टिरेतावत्कर्म षट्त्रिꣳशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक एव तावान्यावानसौ पूर्वः॥७॥

तत्कर्माग्निमसृजताविस्तरां वा अग्निः कर्मणः कर्मणा ह्येनं जनयन्ति कर्मणेन्धते सोऽयमग्निः सृष्ट आविरबुभूषन्निरुक्ततरो मूर्ततरः स आत्मानमन्वैच्छत्स तपोऽतप्यत स प्रामूर्च्छत्स षट्त्रिꣳशतꣳ सहस्राण्यपश्यदात्मनोऽग्नीनर्कानग्निमयानग्निचितस्तेऽग्निनैवाधीयन्ताग्निनाचीयन्ताग्निनैषु ग्रहा अगृह्यन्ताग्निनास्तुवताग्निना शꣳसन्यत्किञ्च यज्ञे कर्म क्रियते

[1] संदेघमन्त्र MD, V2

**6.** That eye created the ear, this ear so created wanted to manifest itself more definitely and in a grosser form. It searched for itself. It practised *tapas* and became distinct. It saw thirty-six thousand *Agni*-altars (*vedīs*) of worship all in the form of ear and made of *citis* (layers) of ear. They made the hearths by ear; built up the altar by ear; collect the Soma cups for them by ear; chanted the *stotras* by ear and recited the *śastrās* by ear. Thus whatever rite is performed in a sacrifice and whatever happens to be a sacrificial work all that was done in those fires in the form of ear; on those layers made up of ear and performed by ear, whatever these beings say orally that action is only of those sayings; he places only those, builds up only that, collects only in them; chants *stotras* only on them and recites the *śastrās* only for them. This much is the expanse of ear; this much is its creation. This much constitutes thirty-six thousand Agnis (*vedīs*) of worship. Each of them was as great as the previous one.

**7.** That ear created Karma and that Karma amalgamated with the vital airs; to form this compound and this composition of food (i.e. body); for, Karma, without vital airs, is incomplete and vital airs without Karma is also incomplete. This Karma wanted to manifest itself more definitely and in a grosser form. It searched for itself. It practised *tapas* and became distinct. It saw thirty-six thousand *Agni*-altars (*vedīs*) of worship all in the form of Karma and made of *citis* (layers) of Karma. They made the hearths by Karma; built up the altar by Karma; collected the Soma cups for them by Karma; chanted the *stotras* by Karma and recited the *śastrās* by Karma – that whatever rite is performed in a sacrifice and whatever happens to be a sacrificial work all that was done in those fires in the form of Karma, on those layers made up of Karma and performed by Karma. Whatever these beings say orally, that action is only of those sayings; he places only those, builds up only that, collects Soma cups only in them; chants *stotras* only on them and recites the *śastrās* only for them. This much is the expanse of Karma; this much its creation; this much constitutes thirty-six thousand Agnis (*vedīs*) of worship. Each of them was as great as the previous one.

**8.** That Karma created the Agni – fire is indeed more manifested than work; for it is by means of Karma they produce the Agni and by Karma they kindle it. This Agni when created wanted to manifest itself more definitely and in a grosser form. It searched for itself. It practised *tapas* and became distinct. It saw thirty-six thousand *Agni*-altars (*vedīs*) of worship all

यत्किञ्च यज्ञियं कर्माग्निनैव तेषु तदग्निमयेष्वग्निचित्स्वग्निमयमक्रियत तद्यत्किञ्चेमानि भूतान्यग्निमिन्धते[२] तेषामेव सा कृतिस्तानेवादधति ताꣳश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येतावती वा अग्नेर्विभूतिरेतावती विसृष्टिरेतावानग्निः षट्त्रिꣳशत्सहस्राण्यग्नयो-ऽर्कास्तेषामेकैक एव तावन्यावानसौ पूर्वः॥८॥

ते हैते विद्याचित एव तान्हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते विद्यया हैवैत एवंविदश्चिता भवन्ति॥९॥ इति तृतीयं ब्राह्मणम्॥

## चतुर्थं ब्राह्मणम्

अयं वाव लोक एषोऽग्निश्चितस्तस्याप एव परिश्रितो मनुष्या यजुष्मत्य इष्टकाः पशवः सूददोहा ओषधयश्च वनस्पतयश्च पुरीषमाहुतयः समिधोऽग्निर्लोकंपृणा तद्वा एतत्सर्वमग्निमेवा-भिसम्पद्यते तत्सर्वोऽग्निर्लोकंपृणामभिसंपद्यते स यो हैतदेवं वेद लोकम्पृणामेनं भूतमेतत्सर्वमभिसंपद्यते॥१॥

अन्तरिक्षꣳ ह त्वेवैषोऽग्निश्चितस्तस्य द्यावापृथिव्योरेव सन्धिः परिश्रितः परेण हान्तरिक्षं द्यावापृथिवी सन्धत्तस्ताः परिश्रितो वयाꣳसि यजुष्मत्य इष्टका वर्षꣳ सूददोहा मरीचयः पुरीषमाहुतयः समिधो वायुर्लोकम्पृणा तद्वा एतत्सर्वं वायुमेवाभिसंपद्ये तत्सर्वोऽग्निर्लोकंपृणा-मभिसंपद्यते स यो हैतदेवं वेद लोकंपृणामेनं भूतमेतत्सर्वमभिसंपद्यते॥२॥

द्यौर्ह त्वेवैषोऽग्निश्चितस्तस्याप एव परिश्रितो यथा ह वा इदं कोशः समुब्जित एवमिमे लोका अप्स्वन्तस्तद्या इमाँल्लोकान्परेणापस्ताः परिश्रितो देवा यजुष्मत्य इष्टका यदेवैतस्मिँल्लोकेऽन्नं

२. इन्धते TE

in the form of Agni and made of *citis* (layers) of Agni. They made the hearths by Agni; built up the altar by Agni; collected the *Soma* cups for them by Agni; chanted the *stotras* by Agni and recited the *śastrās* by Agni. Thus whatever rite is performed in a sacrifice and whatever happens to be a sacrificial work all that was done in those fires in the form of Agni on those layers made up of Agni and performed by Agni. Whatever these beings say orally, that action is only of those sayings; he places only those, builds up only that, collects *Soma* cups only in them; chants *stotras* only on them and recites the *śastrās* only for them. This much is the expanse of Agni; this much its creation; this much constitutes thirty-six thousand Agnis (*vedīs*) of worship. Each of them was as great as the previous one.

**9.** These fires are built up indeed by *vidyā*. All beings at all times build them for him who knows this *vidyā*, even when he is asleep. By *vidyā* alone these fires (altars) are built for him who knows this. (Third Brāhmaṇa Ends.)

**BRĀHMAṆA IV**

**1.** Truly this fire-altar that is built (by bricks) is this terrestrial world. For it, the enclosing stones are the waters themselves. Its *yajuṣmatī* bricks are the human beings. Its *sūdadohasa*, are the cattle. Its loose soil are the plants and trees; its oblations and the *samidhās* too; its *lokaṁpṛṇā* bricks is fire itself. Thus this (terrestrial world) constitutes the whole *Agni*-altar. And the whole Agni comes to be the space-filler. Whosoever knows this, thus becomes that whole (Agni) who is the space-filler (holds sway over this whole world).

**2.** Truly this fire-altar that is built (by bricks) is that aerial region. Its enclosing stones is that which joins the heaven and earth (i.e. horizon); for it is beyong the aerial region that the heaven and earth join and that joining point is the enclosing stones. Its *yajuṣmatī* bricks are the birds; its *sūdadohasa* are the rains; its loose soil (fillers) are the rays of light; its oblations and *samidhās* too. Its *lokaṁpṛṇās* are the Vāyu — thus this (aerial region) constitutes the whole *Agni*-altar and the whole Agni comes to be the space-filler. Whosoever knows this, thus becomes that whole (Agni) who is the space-filler (holds sway over the whole aerial region).

**3.** Truly this fire-altar that is built up (by bricks) is that sky. Its enclosing stones are the waters. Just as a box is closed, these worlds are encased in the

तत्सूददोहा नक्ष-त्राणि पुरीषमाहुतयः समिध आदित्यो लोकंपृणा तद्वा एतत्सर्वमादित्य-मेवाभिसंपद्यते तत्सर्वोऽग्निल्लोंकंपृणामभिसंपद्यते स यो हैतदेवं वेद लोकंपृणामेनं भूतमेतत्सर्वमभिसंपद्यते॥३॥

आदित्यो ह त्वेवैषोऽग्निश्चितस्तस्य दिश एव परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यं दिशः समन्तं परियन्ति रश्मयो यजुष्मत्य इष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यस्य रश्मयस्तद्यत्परिश्रित्सु यजुष्मतीः प्रत्यर्पयति रश्मीꣳस्तद्दिक्षु प्रत्यर्पयत्यथ यदन्तरा दिशश्च रश्मीꣳश्च तत्सूददोहा अथ यद्दिक्षु च रश्मिषु चान्नं तत्पुरीषं ता आहुतयस्ताः समिधोऽथ यद्दिश इति च रश्मय इति चाख्यायते तल्लोकंपृणा तद्वा एतत्सर्वं दिश इति चैव रश्मय इति चाख्यायते तत्सर्वोऽग्निर्लोकंपृणामभिसंपद्यते स यो हैतदेवं वेद लोकंपृणामेनं भूतमेतत्सर्वमभिसंपद्यते॥४॥

नक्षत्राणि ह त्वेवैषोऽग्निश्चितस्तानि वा एतानि सप्तविꣳशतिर्नक्षत्राणि सप्तविꣳशतिः-सप्तविꣳशतिर्होपनक्षत्राण्येकैकं नक्षत्रमनूपतिष्ठन्ते तानि सप्त च शतानि विꣳशतिश्चाधि षट्त्रिꣳशत्ततो यानि सप्त च शतानि विꣳशतिश्चेष्टका एव ताः षष्टिश्च त्रीणि च शतानि परिश्रितः षष्टिश्च त्रीणि च शतानि यजुष्मत्योऽथ यान्यधि षट्त्रिꣳशत्स त्रयोदशो मासः स आत्मा त्रिꣳशदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिर एव षट्त्रिꣳश्यौ तद्यत्ते द्वे भवतो द्व्यक्षरꣳ हि शिरोऽथ यदन्तरा नक्षत्रे तत्सूददोहा अथ यन्नक्षत्रेष्वन्नं तत्पुरीषं ता आहुतयस्ताः समिधोऽथ यन्नक्षत्राणीत्याख्यायते तल्लोकंपृणा तद्वा एतत्सर्वं नक्षत्राणीत्येवाख्यायते तत्सर्वोऽग्निर्लोकंपृणामभि संपद्यते स यो हैतदेवं वेद लोकंपृणामेनं भूतमेतत्सर्वमभिसंपद्यते ता वा एता एकविꣳशतिर्बृहत्य एकविꣳशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेष स्वर्गं लोकमभिसंपद्यत एकविꣳशं च स्तोमं बृहतीं च छन्दः॥५॥

waters. These waters which are beyond these worlds are the *pariśrits* (enclosing stones). Its *yajuṣmatī* bricks are the gods; its *sūdadohasa* is what food is there in that world. Its loose soil are the stars; the oblations and *samidhās* too. Its *lokampṛṇā* is the sun. Thus this (sky) constitutes the whole *Agni*-altar which is the sun and the whole Agni comes to be the space-filler. Whosoever knows this, thus becomes that whole (Agni) who is the space-filler (holds sway over the whole region of the sky).

**4.** Indeed that fire-altar which is built up is also the sun. Its enclosing stones are the quarters and they are three hundred and sixty because three hundred and sixty quarters encircle the sun. Its *yajuṣmatī* bricks are his rays and they are three hundred and sixty, for the sun has three hundred and sixty rays. As much as he establishes the *yajuṣmatī* bricks within the enclosing stones, he establishes the rays in the quarters. Its *sūdadohasa* is what is between the rays and the quarters. Its loose soil is that food in the quarters and the rays; the oblations and *samidhās* too. Those that are called "quarters" and "rays" are the *lokampṛṇā*. Thus this (sun) constitutes the whole *Agni*-altar and the whole Agni comes to be the space-filler. Whosoever knows this, thus becomes that whole (Agni) who is the space-filler (holds sway over the whole region of the sky).

**5.** Truly that fire-altar which is built up is also the Nakṣatras. They happen to be twenty-seven and there are twenty-seven secondary stars accompanying each Nakṣatra; this makes seven hundred and twenty with extra thirty-six. Of these seven hundred and twenty, the *pariśrits* account for three and sixty and the *yajuṣmatī* bricks for three hundred and sixty. The extra thirty-six are the thirteenth month and that is the body. The truth is made of thirty, the feet with two and the *prāṇas* (channels of breath) with two and the head with two accounts for the (thirty-fifth and) thirty-sixth; because the (word) *śira* has two letters. Its *sūdadoha* is that which is in the inter-space of the Nakṣatras. Its loose soil is the food in the Nakṣatras; the oblations and *samidhās* too. Its *lokampṛṇā* are those that are called Nakṣatras. Thus all these called Nakṣatras come to be the *Agni*-altar and the whole Agni comes to be the space-filler. Whosoever knows this, thus becomes that whole (*Agni*) who is the space-filler (holds sway over the whole Nakṣatras). These (seven hundred and twenty plus thirty-six) correspond to twenty-one Bṛhatī metres (since each Bṛhatī has thirty-six syllables). The heavenly world is twenty-onefold and Bṛhatī is(great). Thus this fire-altar comes to be equal to the heavenly world; to the twenty-onefold *stoma* and the Bṛhatī metre.

छन्दांःसि ह त्वेवैषोऽग्निश्चितस्तानि वा एतानि सप्त छन्दांःसि चतुरुत्तराणि[1] च त्रिचानि तेषाः सप्त च शतानि विंःशतिश्चाक्षराण्यधि षट्त्रिंःशत्ततो यानि सप्त च शतानि विंःशतिश्चेष्टका एव ताः षष्टिश्च त्रीणि च शतानि परिश्रितः षष्टिश्च त्रीणि च शतानि यजुष्मत्योऽथ यान्यधि षट्त्रिंःशत्स त्रयोदशो मासः स आत्मा त्रिंःशदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिर एव षट्त्रिंःश्यौ तद्यत्ते द्वे भवतो द्व्यक्षरंः हि शिरस्तस्यै वा एतस्यै षट्त्रिंःशदक्षरायै बृहत्यै यानि दश प्रथमान्यक्षराणि सा दशाक्षरैकपदाथ यानि विंःशतिः सा विंःशत्यक्षरा द्विपदाथ यानि त्रिंःशत्सा त्रिंःशदक्षरा विराळथ यानि त्रयस्त्रिंःशत्सा त्रयस्त्रिंःशदक्षराथ यानि चतुस्त्रिंःशत्सा चतुस्त्रिंःशदक्षरा स्वराळथ यत्सर्वैश्छन्दोभिरयमग्निश्चितस्तदतिछन्दास्ता उ सर्वा इष्टका एवेष्टकेति त्रीण्यक्षराणि त्रिपदा गायत्री तेनैष गायत्रोऽग्निर्मृदाप इति त्रीण्यक्षराणि त्रिपदा गायत्री तेनो एवैष गायत्रोऽथ यदन्तरा छन्दसी तत्सूददोहा अथ यच्छन्दः स्वन्नं तत्पुरीषं ता आहुतयस्ताः समिधोऽथ यच्छन्दांःसीत्याख्यायते तल्लोकंपृणा तद्वा एतत्सर्वं छन्दांःसीत्येवाख्यायते तत्सर्वोऽग्निर्लोकंपृणामभिसंपद्यते स यो हैतदेवं वेद लोकंपृणामेनं भूतमेतत्सर्वमभि संपद्यते ता वा एता एकविंःशतिर्बृहत्य एकविंःशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेष स्वर्गं लोकमभिसंपद्यत एकविंःशं च स्तोमं बृहतीं च छन्दः॥६॥

संवत्सरो ह त्वेवैषोऽग्निश्चितस्तस्य रात्रय एव परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्य रात्रयोऽहानि यजुष्मत्य इष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहान्यथा[2] या अमूः षट्त्रिंःशदिष्टका अतियन्ति यः स त्रयोदशो मास आत्मार्धमासाश्च ते मासाश्च चतुर्विंःशतिरर्धमासा द्वादशमासा अथ यदन्तराहोरात्रे तत्सूददोहा अथ यदहोरात्रेष्वन्नं तत्पुरीषं

१. चतुरुत्तराणि त्रिचानि MD
२.अहात्यथ या MD

**6.** Truly that fire-altar that is built up is the metres. There are seven metres increasing by four syllables each successive one (i.e. from 24 syllables for the first metre, i.e. Gāyatrī, it goes on increasing by four syllables in the subsequent ones till the seventh having 48). The triplets of these make seven hundred and twenty syllables with an excess of thirty-six syllables (24 + 28 + 32 + 36 + 40 + 44 + 48 = 252 x 3 = 756). Those seven hundred and twenty are verily the bricks out of which three hundred and sixty are *pariśrits* (enclosing stones) and three hundred and sixty are the *yajuṣmatī* bricks. Those thirty-six in excess are the thirteenth month and that is the body of this altar. (Of these) the trunk accounts for thirty, the feet two and the channels of breath two, the head with two accounts for the (thirty-fifth and thirty-sixth). The head accounts for two because the word *śira* has two letters. The first ten syllables of the Bṛhatī, consisting of thirty-six syllables make an Ekapād (one-footed verse) of ten syllables; the first twenty of Bṛhatī make a Dvipadā (two-footed verse) of twenty syllables; the first thirty make a Virāḍ of thirty syllables; the first thirty-three make a Virāḍ of thirty-three syllables and thirty-four syllables make a Svarāṭ of thirty-four syllables. Since this fire-altar is built with all metres; it is an Atichandas (a metre with more than 48 syllables) and (so) are all these bricks. The three syllables in (the word) *iṣṭakā*—form a Gāyatrī of three feet, because this Agni is Gāyatra (of three syllables) and (constitutents of the brick namely) the *mṛd* (clay) and *āpaḥ* (water) are also Gāyatrī of three feet. Thereby also he is Gāyatrȧ. That which is between each two metres; is its *sūdadohasa* and its loose soil is the food which is in the metres; the oblations and *samidhās* too. What is called "metres" is the *lokaṁpṛṇā* brick— thus all these called metres come to be the *Agni*-altar and the whole Agni comes to be the space-filler. Whosoever knows this thus becomes that whole (Agni) who is the space-filler (holds sway over the metres). These are twenty-one Bṛhatīs and the heavenly world is twenty-onefold and is great and this (altar) becomes equal to the heavenly world and to the twenty-onefold *stoma* and the Bṛhatī metre.

**7.** That fire-altar that is built up is truly the year. Its enclosing stones are the nights and they happen to be three hundred and sixty and a year has three hundred and sixty nights. The *yajuṣmatī* bricks are the days and they happen to be three hundred and sixty and there are three hundred and sixty days for a year. These thirty-six bricks that are in excess are the thirteenth (intercalary) month. Its body is made of half-months and months, i.e. twenty-four half-months and twelve months. Its *sūdadohasa* is what is

ता आहुतयस्ताः समिधोऽथ यदहोरात्राणीत्याख्यायते तल्लोकंपृणा तद्वा एतत्सर्वमहोरात्राणीत्याख्यायते[३] तत्सर्वोऽग्निर्लोकंपृणामभिसंपद्यते ता वा एता एकविꣳशतिर्बृहत्य एकविꣳशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेष स्वर्गं लोकमभिसम्पद्यत एकविꣳशं च स्तोमं बृहतीं च छन्दः॥७॥

आत्मा ह त्वेवैषोऽग्निश्चितस्तस्यास्थीन्येव परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि पुरुषस्यास्थीनि मज्जानो यजुष्मत्य इष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि पुरुषस्य मज्जानोऽथ या अमूः षट्त्रिꣳशदिष्टका अतियन्ति यः स त्रयोदशो मास आत्मा प्राणः स तस्य त्रिꣳशदात्मन्विधाः प्रतिष्ठायां द्वे प्राणेषु द्वे शीर्षन्द्वे तद्यत्ते द्वे भवतो द्विकपालꣳहि शिरोऽथ येनेमानि पर्वाणि सन्ततानि तत्सूददोहा अथैतत्त्रयं येनायमात्मा प्रच्छन्नो लोम त्वङ्माꣳसमिति तत्पुरीषं यत्पिबति ता आहुतयो यदश्नाति ताः समिधोऽथ यदात्मेत्याख्यायते तल्लोकंपृणा तद्वा एतत्सर्वमात्मेत्येवाख्यायते तत्सर्वोऽग्निर्लोकंपृणामभिसंपद्यते स यो हैतदेवं वेद लोकंपृणामेनं भूतमेतत्सर्वमभिसंपद्यते ता वा एताः एकविꣳशतिर्बृहत्य एकविꣳशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेष स्वर्गं लोकमभिसंपद्यत एकविꣳशं च स्तोमं बृहतीं च छन्दः॥८॥

सर्वाणि ह त्वेव भूतानि सर्वे देवा एषोग्निश्चित आपो वै सर्वे देवाः सर्वाणि भूतानि ता हैता आप एवैषोऽग्निश्चितस्तस्य नाव्या एव परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यं नाव्याः समन्तं परियन्ति नाव्या उ एव यजुष्मत्य इष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यं नाव्या अभिक्षरन्त्यथ यदन्तरा नाव्येतत्सूददोहा अथ या अमूः षट्त्रिꣳशदिष्टका अतियन्ति यः स त्रयोदशो मास आत्माऽयमेव स योऽयꣳ हिरण्मयः पुरुषस्तस्यैते प्रतिष्ठे रुक्मश्च पुष्करपर्णं चापश्चादित्यमण्डलं च स्रुचौ बाहू ताविन्द्राग्नी द्वे स्वयमातृण्णे इयं चान्तरिक्षं च तिस्रो विश्वज्योतिष एता देवता अग्निर्वायुरादित्य एता ह्येव देवता विश्वं ज्योतिर्द्वादशर्तव्याः स संवत्सरः स आत्मा पञ्च नाकसदः पञ्च पञ्चचूडाः स यज्ञस्ते देवा अथ यद्विकर्णी च स्वयमातृण्णा चाश्मा

३. रात्राणीत्येवाख्यायते MD

between the day and the night; the loose soil is that food which is in the day and the night. The oblations and the *samidhās* too. What is called "days and the nights" that constitutes the *lokaṁpṛṇā* (brick). Thus all these come to be the *Agni*-altar and the whole Agni becomes the space-filler. Whosoever knows this, thus becomes that whole (Agni) who is the space-filler (holds sway over the year). There are twenty-one Bṛhatīs and the heavenly world is twenty-onefold and is great. This (altar) becomes equal to the heavenly world and to the twenty-onefold *stoma* and the Bṛhatī metre.

**8.** Indeed the fire-altar that is built up is the body. Its enclosing stones are the bones and they happen to be three hundred and sixty; for the human being has three hundred and sixty bones. Its *yajuṣmatī* bricks are the marrow. They are three hundred and sixty corresponding to three hundred and sixty parts in man. Those thirty-six bricks in excess are the thirteenth (intercalary) month; the trunk and the vital air (of the altar). In his body, there are thirty parts, two in his feet, two in his (channels of) *prāṇa* and two in his head. Why (two in the head) is, because the head has two skull bones. Its *sūdadohasa* is that which holds together these joints; its loose soil are those three by which this body is covered; the hair, skin and flesh are the loose soil. Its oblations are what he drinks and its *samidhās* are what he eats. That which is called the "body" is the *lokaṁpṛṇā* (bricks) – thus all these come to be the *Agni*-altar and the whole Agni becomes the space-filler. Whosoever knows this, thus becomes the whole (Agni) who is the space-filler (holds sway over the body). These are twenty-one Bṛhatīs and the heavenly world is twenty-onefold and it is great. This (altar) becomes equal to the heavenly world and to the twenty-onefold *stoma* and the Bṛhatī metre.

**9.** This Agni (altar) that is built up is all beings, all the gods; for all the beings and all the gods are the waters and that altar built up is the same as those waters. Its enclosing stones are the navigable streams. They happen to be three hundred and sixty; for, there are three hundred and sixty streams of navigable nature which go round the sun. The *yajuṣmatī* bricks are those navigable streams and they are three hundred and sixty as there are three hundred and sixty navigable streams flowing towards the sun. Its *sūdadohasa* is what is between each (pair) of the navigable streams. Those thirty-six bricks which are in excess are the thirteenth month and the body (of this altar) is the same as this gold man. His feet are this gold plate and the lotus leaf; (in other words) the waters and the sun's orb are his feet; the two *sruks*; (in other words) Indra and Agni are his arms; the two *svayamātṛṇṇā*

पृश्निर्यश्चितेऽग्निर्निधीयते सा पञ्चत्रिꣳशी लोकंपृणायै यजुः षट्त्रिꣳशी सोऽस्यैष सर्वस्यान्तमेवात्मा स एष सर्वासामपां मध्ये स एष सर्वैः कामैः संपन्न आपो वै सर्वेकामाः स एषोऽकामः सर्वकामो न ह्येतं कस्य चन कामः॥९॥

तदेष श्लोको भवति विद्यया तदारोहन्ति यत्र कामाः परागताः न तत्र दक्षिणा यन्ति नाविद्वाꣳसस्तपस्विन इति न हैव तं लोकं दक्षिणाभिर्न तपसाऽनेवंविदश्नुत एवंविदाꣳहैव स लोकोऽभ्रं पुरीषं चन्द्रमा आहुतयो नक्षत्राणि समिधो यच्चन्द्रमा नक्षत्रे वसत्याहुतिस्तत्समिधि वसत्येतदु वा आहुतेरन्नमेषा प्रतिष्ठा तस्मादाहुतिर्न क्षीयत एतद्ध्यस्या अन्नमेषा प्रतिष्ठाऽथ यद्देवा इत्याख्यायते तल्लोकंपृणा तद्वा एतत्सर्वं देवा इत्येवाख्यायते॥१०॥

तदेतदृचाभ्युक्तं विश्वे देवा अनु तत्ते यजुर्गुरिति सर्वाणि ह्यत्र भूतानि सर्वे देवा यजुरेव भवन्ति तत्सर्वोऽग्निर्लोकंपृणामभिसंपद्यते स यो हैतदेवं वेद लोकंपृणामेनं भूतमेतत्सर्वमभिसंपद्यते ता वा एताः एकविꣳशतिर्बृहत्य एकविꣳशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेष स्वर्गं लोकमभिसंपद्यत एकविꣳशं च स्तोमं बृहतीं च छन्दः॥११॥ इति चतुर्थं ब्राह्मणम्॥

## पञ्चमं ब्राह्मणम्

कुश्रिर्ह वाजश्रवसोऽग्निं चिक्ये तꣳ होवाच सुश्रवाः कौश्यो गौतमं यदग्निमचैषीः प्राञ्चमेनमचैषीः

bricks are this earth and the air and the three *viśvajyoti* bricks are the three deities; namely Agni, Vāyu and Āditya. Because these three deities constitute all effulgence. The twelve *ṛtavyā* (seasonal) bricks are the year, the body(of the altar and the gold man). The five *nākasada* bricks and the five *pañcacūḍas* are the sacrifice; the gods; and the *vikarṇī* the (third) naturally perforated brick and the spotted stone. The fire which is deposited (on the altar) is the thirty-fifth and the *Yajus* for the *lokaṁpṛṇā* brick is the thirty-sixth. That (goldman) indeed the body (of the altar) is the culmination of all. He is in the midst of all waters and is filled with all objects of desire; for all objects of desire are indeed the waters. While possessed of all (objects of) desires, he has no desire; for no desire of anything is there to (trouble) him.

**10.** There is a verse on this – "By means of *Vidyā* (true knowledge) they ascend to that wherefrom the desires have vanished. There the *dakṣiṇās* do not reach nor those who practise *tapas* without the knowledge" – that world (of self) is not achieved by giving liberal gifts or by *tapas* if he is not one who knows thus. Only by those who know thus (of true knowledge) that world is (attainable). The cloud is the loose soil (between the bricks); the moon is oblation; the Nakṣatras are the *samidhās*. Because the moon lives in the Nakṣatra, the oblation resides in the *samidhā*. That staying of the moon in the Nakṣatra is the food of the oblation. That the moon resides in the Nakṣatra is (to say) that the oblation is residing in the *samidhā*. This is the food of the oblation and it is its support. Therefore the *āhuti* or oblation does not diminish (*na kṣīyate*). This is indeed its food and support. What they call "gods" is the *lokaṁpṛṇā* and that is why, all these are called the gods.

**11.** With reference to this it is said by the *Ṛk* – "All gods (Viśvedevas) have followed this you *Yajus*" – for all beings, all the gods indeed become the *Yajus* here. Thus this whole Agni becomes the *lokaṁpṛṇā*. Whosoever know this, thus, becomes to be that whole (Agni) who is the space-filler. Now, these (constitute) twenty-one Bṛhatīs and the heavenly world is twenty-onefold and is the great. This (altar) thus becomes equal to the heavenly world and to the twenty-onefold *stoma* and the Bṛhatī metre. (Fourth Brāhmaṇa Ends.)

**BRĀHMAṆA V**

**1.** Kuśri Vājaśravasa once constructed a fire-altar. Then Suśravas, Kauśya, told him the son of Gautama, "When you just now built up the altar, did

प्रत्यञ्चमेनमचैषीर्न्यञ्चमेनमचैषीरुत्तानमेनमचैषीर्यद्यहैनं प्राञ्चमचैषीर्यथा पराच आसीनाय पृष्ठतोऽन्नाद्यमुपाहरेत्तादृक्तन्न ते हविः प्रतिग्रहीष्यति यद्यु वा एनं प्रत्यञ्चमचैषीः कस्मादस्य तर्हि पश्चात्पुच्छमकार्षीर्यद्यु वा एनं न्यञ्चमचैषीर्यथा नीचः शयानस्य पृष्ठतोऽन्नाद्य[1] प्रतिष्ठापयेत्तादृक्तन्नैव ते हविः प्रतिग्रहीष्यति यद्यु वा एनमुत्तानमचैषीर्न वा उत्तानं वयः स्वर्गं लोकमभिवहति न त्वा स्वर्गं लोकमभिवक्ष्यत्यस्वर्ग्य उ ते भविष्यतीति॥१॥

स होवाच प्राञ्चमेनमचैषं प्रत्यञ्चमेनमचैषं न्यञ्चमेनमचैषमुत्तानमेनमचैषं सर्वा अनुदिश एनमचैषमिति स यत्प्राञ्चं पुरुषमुपदधाति प्राच्यौ स्रुचौ तत्प्राङ् चीयतेऽथ यत्प्रत्यञ्चं कूर्ममुपदधाति प्रत्यञ्चि पशुशीर्षाणि तत्प्रत्यङ्चीयतेऽथ यन्न्यञ्चं कूर्ममुपदधाति न्यञ्चि पशुशीर्षाणि नीचीरिष्टकास्तन्न्यङ्चीयतेऽथ यदुत्तानं पुरुषमुपदधात्युत्ताने स्रुचा उत्तानमुलूखलमुत्तानामुखां तदुत्तानश्चीयतेऽथ यत्सर्वा अनुदिशः परिसर्प्यमिष्टका उपदधाति तत्सर्वतश्चीयते॥२॥

अथ ह कोषा धावयन्तो निरूढशिरसमग्निमुपाधावयां चक्रुस्तेषां हैक उवाच श्रीर्वै शिरः श्रियमस्य निरौहीत्सर्वज्यानिं ज्यास्यत इति स ह तथैवासाऽथ हैक उवाच प्राणा वै शिरः प्राणानस्य निरौहीत्क्षिप्रेऽमुं लोकमेष्यतीति स उ ह तथैवासोर्ध्वो वा एष एतच्चीयते यद्दर्भस्तम्बो लोगेष्टकाः पुष्करपर्णंरुक्मपुरुषौ स्रुचौ स्वयमातृण्णा दूर्वेष्टका द्वियजू रेतःसिचौ विश्वज्योतिर्ऋतव्ये

१. पृष्ठेऽन्नाद्यं MD

you build it up to make it face forward,or built it to make it face backward or downward or upward? If you have built him so as to face upward it would be just as if one were to feed a person from behind (facing the same direction as the altar, since the one who makes the offering has to face the east) to a person who is sitting with an averted face. In this process he will not receive your offering. If you have built it facing backward, then why have you put a tail (since that would amount to having a tail in front and not at the back). If you have built it facing downward it would be just as somebody is feeding from behind, a person lying with his face to the ground. Surely in this way he will not receive the offering. If you have built it facing upward, surely a bird does not fly (carrying its bite in its beak) with its face turned upwards and it (the altar being a bird is supposed to carry the Yajamāna to the heaven) will not be able to carry you to the heaven and that sacrifice will not yield the fruit of heaven."

**2.** He(Kuśri) said, "I have built it so as to face forward, to face backward, to face downward as well as to face upward. I have built it in all directions. In so far as the gold man is placed with his face turned to the east; the two *sruks* are placed with their spouts facing east; it (the altar) is built so as to face forward. By laying down the tortoise with its head westward; the heads of *paśus* turned to the west, the altar is built as to face backward. By placing the tortoise with its face turned downwards and the heads of the *paśus* looking downwards and the bricks with their faces (sides not marked by lines) downwards, the altar is built so as to face downwards. By placing the goldman with his face upward, and the two *sruks* (with their spouts) turned upwards and the mortar and pestle facing upward, the fire-altar is built so as to face upwards. By placing the bricks while moving round the altar in all directions, it is built so as to face all directions."

**3.** Now, Koṣās ( a particular group of *Ṛṣis*) going about officiating as sacrificial priests, happened to build up the head of the altar seperately (in a particular Yajamāna's house). At that, someone said, "The head is indeed *Śrī*, prosperity) and by doing thus, the Yajamāna's *Śrī* has been seperated and he will be always deprived of prosperity." So it happened. Another one said, "The head is indeed the vital airs and by doing thus, they have separated the vital airs from the Yajamāna and consequently very shortly he will depart to the other world." So it happened. Upward, indeed, it is built up by means of the *darbhastamba*, the *logeṣṭakās*; the lotus

अषाळ्हा कूर्मोऽथ हास्यैतदेव प्रत्यक्षतमाᳲ शिरो यश्चितेऽग्निर्निधीयते तस्मान्न निरूहेत्॥३॥
इति पञ्चमं ब्राह्मणम्॥

॥ इति पञ्चमोऽध्यायः ॥

leaf, the gold plate, the gold man, the two *sruks*, the *svayamatṛṇṇā*, the *dūrveṣṭakā*, the *dviyajus*, the two *retassicās*, the *viśvajyoti*; the two *ṛtavyā* bricks, the *āṣāḍha* and the tortoise. That fire which is placed on the top of the built altar is the most visible head; so let him not separate it. (Fifth Brāhmaṇa Ends.)

**(Chapter Five Ends.)**

## षष्ठोऽध्यायः

### प्रथमं ब्राह्मणम्

अथ हैतेऽरुण औपवेशौ समाजग्मुः सत्ययज्ञः पौलुषिर्महाशालो जाबालो बुडिल आश्वतराश्विरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यस्ते ह वैश्वानरे समासत तेषाꣳ ह वैश्वानरे न समियाय॥१॥

ते होचुरश्वपतिर्वा अयं कैकेयः संप्रति वैश्वानरं वेद तं गच्छामेति ते हाश्वपतिं कैकेयमाजग्मुस्तेभ्यो ह पृथगावसथान्पृथगपचितीः पृथक्साहस्रान्त्सोमान्प्रोवाच ते ह प्रातरसंविदाना एव समित्पाणयः प्रतिचक्रमिर उप त्वायामेति॥२॥

स होवाच यन्न भगवन्तोऽनूचाना अनूचानपुत्राः किमिदमिति ते होचुर्वैश्वानरꣳ ह भगवन्त्संप्रति वेद तं नो ब्रूहीति स होवाच संप्रति खलु न्वा अहं वैश्वानरं वेदाभ्याधत्त समिध उपेता स्थेति॥३॥

स होवाचारुणमौपवेशिं गौतम कं त्वं वैश्वानरं वेत्थेति पृथिवीमेव राजन्निति होवाचोमिति होवाचैष वै प्रतिष्ठा वैश्वानर एतꣳ हि वै त्वं प्रतिष्ठां वैश्वानरं वेत्थ तस्मात्त्वं प्रतिष्ठितः प्रजया पशुभिरसि यो वा एतं प्रतिष्ठां वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेति पादौ त्वा एतौ वैश्वानरस्य पादौ तेऽम्लास्यतां यदि ह नागमिष्य इति पादौ तेऽविदितावभविष्यतां यदि ह नागमिष्य इति वा॥४॥

अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वं वैश्वानरं वेत्थेत्यप एव राजन्निति होवाचोमिति होवाचैष वै रयिर्वैश्वानर एतꣳ हिं वै त्वꣳ रयिं वैश्वानरं वेत्थ तस्मात्त्वꣳ रयिमान्पुष्टिमानसि यो

## Chapter Six

### BRĀHMAṆA I

**1.** Once the following sages came to Aruṇa, the son of Upaveśa. Satyayajña Pauluṣi; Mahāśāla Jābāla; Buḍila Āśvaṭarāśvī; Indradyumna-Bhāllaveya and Jana-Śārkarākṣya. They assembled to know on Vāiśvānara (to learn about the nature of Vaiśvānara), but they could not reach at an acceptable definition (from Aruṇa).

**2.** They said, "Aśvapati, the Kekaya king is the one who knows Vaiśvānara at present; let us go to him." They approached Aśvapati-Kekaya and he ordered for them separate dwellings; separate hospitality and separate *Somayāgās*, each with thousand cows as *dakṣiṇā.* In the morning, they, with-out realising the intention (of the king to avail of their services for perform-ing sacrifices) came to him again with *samidhās* in their hands (indicating their intention to learn) saying, "We seek to be your disciples."

**3.** He (Kekaya) said, "You are learned in Vedas and sons of great ones well-versed in Vedic lore; how you come to approach me as students?" They said, "Sir, you know well the Vaiśvānara (*vidyā*); teach that to us." He said, "I do indeed know well the Vaiśvānara; put the *samidhās* in the fire and you are (admitted as) my students."

**4.** He then questioned Aruṇa Aupaveśi, "O Gautama, which Vaiśvānara, you know of ?" (i.e. tell me what is your idea of Vaiśvānara). "I know it as earth, O king", he said. The king replied, "That means you know Vaiśvānara as the foundation; and because you know Vaiśvānara as the foundation, you are well-settled with cattle and children. One who knows the Vaiśvānara thus as *pratiṣṭhā* (foundation) conquers death and lives the full span of life. But this in reality, is only the feet of Vaiśvānara. It is good that you know at least this much so that your feet did not wither away and you could come here." (In other words) if you had not come here, you would have known only the feet.

**5.** He then asked Satyayajña Pauluṣī, "O Prācīnayogya, which Vaiśvānara, you know of ?" "I know it as water, O king", he said. The king replied, "That means you know Vaiśvānara as wealth and because you know Vaiśvānara,

वा एतꣳ रयिं वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेति बस्तिस्त्वा एष वैश्वानरस्य बस्तिस्त्वा हास्यद्यदि ह नागमिष्य इति बस्तिस्तेऽविदितोऽभविष्यद्यदि ह नागमिष्य इति वा॥५॥

अथ होवाच महाशालं जाबालमौपमन्यव कं त्वं वैश्वानरं वेत्थेत्याकाशमेव राजन्निति होवाचोमिति होवाचैष वै बहुलो वैश्वानर एतꣳ हि वै त्वं बहुलं वैश्वानरं वेत्थ तस्मात्वं बहुः प्रजया पशुभिरसि यो वा एतं बहुलं वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेत्यात्मा त्वा एष वैश्वानरस्यात्मा त्वा हास्यद्यदि ह नागमिष्य इत्यात्मा तेऽविदितोऽभविष्यद्यदि ह नागमिष्य इति वा॥६॥

अथ होवाच बुडिलमाश्वतराश्विं वैयाघ्रपद्य कं त्वं वैश्वानरं वेत्थेति वायुमेव राजन्निति होवाचोमिति होवाचैष वै पृथग्वर्त्मा वैश्वानर एतꣳ हि वै त्वं पृथग्वर्त्मानं वैश्वानरं वेत्थ तस्मात्त्वां पृथग्रथश्रेणयोऽनुयान्ति यो वा एतं पृथग्वर्त्मानं वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेति प्राणस्त्वा एष वैश्वानरस्य प्राणस्त्वा हास्यद्यदि ह नागमिष्य इति प्राणस्तेऽविदितोऽभविष्यद्यदि ह नागमिष्य इति वा॥७॥

अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कं त्वं वैश्वानरं वेत्थेत्यादित्यमेव राजन्निति होवाचोमिति होवाचैष वै सुततेजा वैश्वानर एतꣳ हि वै त्वꣳ सुततेजसं वैश्वानरं वेत्थ तस्मात्तवैष सुतोऽद्यमानः पच्यमानोऽक्षीयमाणो गृह्येषु[1] तिष्ठति यो वा एताꣳ सुततेजसं वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेति चक्षुस्त्वा एतद्वैश्वानरस्य चक्षुस्त्वा हास्यद्यदि ह नागमिष्य इति चक्षुस्तेऽविदितमभविष्यद्यदि ह नागमिष्य इति वा॥८॥

१. गृहेषु MD

the wealth, you are rich and prosperous. He who knows that Vaiśvānara, the wealth, conquers death and lives the full span of life. But this in reality, is only the bladder of Vaiśvānara. It is good that you knew at least this much so that your bladder has not become defunct and you could come here", (in other words) if you had not come here you would have known only the bladder.

**6.** He then questioned Mahāsāla-Jābāla, "O Aupamanyava, which Vaiśvānara you know of ?" "I know it as the Ākāśa(ether), O king", he said. The king said, "That means you know Vaiśvānara as abundance; and because you know Vaiśvānara, the Bahula (abundant) you are having abundance of progeny and cattle. He who knows Vaiśvānara, the abundant, conquers death and lives the full span of life. But this in reality, is only the body (trunk) of Vaiśvānara; it is good that you knew at least this much so that your body has not got disintegrated (perished) and you could come here." (In other words) if you had not come here you could have only known the body.

**7.** He then asked Buḍila Āśvatarāsvī, "O Vaiyāghrapadya, which Vaiśvānara, you know of ?" "I know it as Vāyu; O king", he said. The king said, "That means you know Vaiśvānara of multiple paths; and because you know Vaiśvānara, the Pṛthagvartmā, numerous rows of cars follow you. He who knows this Vaiśvānara of multiple paths, conquers death and reaches the full span of life. But this in reality, is only the breath (*prāṇa*) of Vaiśvānara. It is good that you know at least this much so that your vital air did not pass out of you and you could come here." (In other words) if you had not come here, you would have known only the *prāṇa* (of Vaiśvānara).

**8.** He then questioned Indradyumna-Bhāllaveya, "O Vaiyāghrapadya, which Vaiśvānara you know of ?" "I know it as sun, O king", he said. The king said, "That means, you know Vaiśvānara, the Sutatejas (of the splendour of *Soma* juice). Because you know Vaiśvānara, the Sutatejā, that *Soma* juice is ever available in your house, eaten and cooked (i.e. *Soma* is always pressed to prepare various offerings in your house). Truly he who knows this Vaiśvānara, the Sutatejās, conquers death and lives the full span of life. But this in reality, is only the eye of Vaiśvānara. It is good that you know at least this much so that your eye did not become defunct and you could come here." (In other words) if you had not come here you would have known only the eye.

अथ होवाच जनꣳ शार्कराक्ष्यꣳ सायवस कं त्वं वैश्वानरं वेत्थेति दिवमेव राजन्निति होवाचोमिति होवाचैष वा अतिष्ठा वैश्वानर एतꣳ हि वै त्वमतिष्ठां वैश्वानरं वेत्थ तस्मात्त्वꣳसमानानतिष्ठसि यो वा एतमतिष्ठां वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेति मूर्द्धा त्वा एष वैश्वानरस्य मूर्द्धा त्वा हास्यद्यदि ह नागमिष्य इति मूर्द्धा तेऽविदितोऽभविष्यद्यदि ह नागमिष्य इति वा॥९॥

तान्होवाचैते वै यूयं पृथग्वैश्वानरान्विद्वाꣳसः पृथगन्नमघस्त प्रादेशमात्रमिव ह वै देवाः सुविदिता अभिसंपन्नास्तथा तु व एनान्वक्ष्यामि यथा प्रादेशमात्रमेवाभिसंपादयिष्यामीति॥१०॥

स होवाच मूर्द्धानमुपदिशन्नेष वा अतिष्ठा वैश्वानर इति चक्षुषी उपदिशन्नुवाचैष वै सुततेजा वैश्वानर इति नासिके उपदिशन्नुवाचैष वै पृथग्वर्त्मा वैश्वानर इति मुख्यमाकाशमुपदिशन्नुवाचैष वै बहुलो वैश्वानर इति मुख्या अप उपदिशन्नुवाचैष वै रयिर्वैश्वानर इति च्छुबुकमुपदिशन्नुवाचैष वै प्रतिष्ठा वैश्वानर इति स एषोऽग्निर्वैश्वानरो यत्पुरुषः स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेदाप पुनर्मृत्युं जयति सर्वमायुरेति न हास्य ब्रुवाणं चन वैश्वानरो हिनस्ति॥११॥इति प्रथमं ब्राह्मणम्॥

## द्वितीयं ब्राह्मणम्

द्वयं वा इदमत्ता चैवाद्यं च तद्यदोभयꣳ समागच्छत्यत्तैवाख्यायते नाद्यम्॥१॥

स वै यः सोऽत्ताऽग्निरेव स तस्मिन्यत्किञ्चाभ्यादधत्याहितय एवास्य ता आहितयो ह वै ता आहुतय इत्याचक्षते परोक्षं परोक्षकामा हि देवा आदित्यो वा अत्ता तस्य चन्द्रमा

**9.** He then asked Jana-Śārkarākṣya, "O Sāyavasa, which Vaiśvānara, you know of ?" "I know it as the heaven only, O king", he said. The king said, "That means you know Vaiśvānara, the Atiṣṭhā (the one that surpasses everything). Because you know Vaiśvānara, the Atiṣṭhā, you are excelling your equals. Truly he who knows the Vaiśvānara, the Atiṣṭhā, conquers death and lives the full span of life. But this in reality is only the head of Vaiśvānara." (In other words) if you had not come here, only the head would have been known to you.

**10.** He said to them, "Each of you know different Vaiśvānaras (or you have understood him each differently). (It is like) eating different kinds of food. But the Devās who knew it well conceived it as of a span-size and they attained the goal (of knowing it). So I shall tell you about it in such a way that I will present it as of the measure of a span. (I shall tell you how the Ātman encompasses all these different parts conceived by each of you as well as the span-size Vaiśvānara known to the gods).

**11.** He said pointing to the head, "This indeed is the Vaiśvānara, surpassing everything." Pointing to eyes he said, "This indeed is the Vaiśvānara of *Soma's* splendour." Pointing at the nostrils he said, "This indeed is the Vaiśvānara of multiple paths." Pointing to the space in the mouth he said, "This indeed is Vaiśvānara the abundant." Pointing at the water in the mouth he said, "This indeed is Vaiśvānara, the prosperity." Pointing at the chin he said, "This indeed is Vaiśvānara, the foundation." "This Agni Vaiśvānara is of the nature of Puruṣa and as established inside the Puruṣa, he conquers death and reaches the full span of life. Vaiśvānara does not harm him who says so. (Common in all these Vaiśvānaras, like Vaiśvānara, the Pratiṣṭhā etc.), there is one Agni-Vaiśvānara who is the supreme Brahman and if one knows him, other Vaiśvānara dare not harm him." (First Brāhmaṇa Ends.)

**BRĀHMAṆA II**

**1.** This world is twofold, the eater and the eaten and when these two come together it is called the eater and not the eaten.

**2.** That which is called the eater is Agni itself and whatever is put into it is its share (*āhita*). What are *āhitas* are called *āhutis* (oblations) in a mystical way, because gods perfer mystical reference. The sun is the eater and his *āhutis* (share) is the moon. This is the divine point of view. Now the physi-

एवाहितयश्चन्द्रमसः ह्यादित्य आदधतीत्यधिदेवतमथाध्यात्मं प्राणो वा अत्ता तस्यान्नमेवाहितयोऽन्नः हि प्राण आदधतीति न्वग्नेः॥२॥

अथार्कस्याग्निर्वा अर्कस्तस्याहुतय एव कमाहुतयो ह्यग्नये कमादित्यो वा अर्कस्तस्य चन्द्रमा एव कं चन्द्रमा ह्यादित्याय कमित्यधिदेवतमथाध्यात्मं प्राणो वा अर्कस्तस्यान्नमेव कमन्नः हिं प्राणाय कमिति न्वेवार्कस्य॥३॥

अथोक्थस्याग्निर्वा उक्तस्याहुतय एव थमाहुतिभिर्ह्यग्निरुत्तिष्ठत्यादित्यो वा उक्तस्य चन्द्रमा एव थं चन्द्रमसा ह्यादित्य उत्तिष्ठतीत्यधिदेवतमथाध्यात्मं प्राणो वा उक्तस्यान्नमेव थमन्नेन हि प्राण उत्तिष्ठतीति न्वेवोक्थस्य स एषोऽग्निविधोऽर्कविध उक्थविधो यत्पुरुषः स यो हैतमेवमग्निविधमर्कविधमुक्थविधं पुरुषमुपास्ते विदुषो हैवास्यैवं भ्रातृव्यो म्लायति॥४॥

प्राणेन वा अग्निर्दीप्यतेऽग्निना वायुर्वायुनादित्य आदित्येन चन्द्रमाश्चन्द्रमसा नक्षत्राणि नक्षत्रैर्विद्युदेतावती वै दीप्तिरस्मिंश्च लोकेऽमुष्मिंश्च सर्वाः हैतां दीप्तिं दीप्यतेऽस्मिंश्च लोकेऽमुष्मिंश्च य एवं वेद॥५॥इति द्वितीयं ब्राह्मणम्॥

## तृतीयं ब्राह्मणम्

सत्यं ब्रह्मेत्युपासीताथ खलु क्रतुमयोऽयं पुरुषः स यावत्क्रतुरयमस्माल्लोकात्प्रैत्येवं क्रतुर्हामुं लोकं प्रेत्याभिसंभवति स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपमाकाशात्मानं कामरूपिणं मनोजवसः सत्यसंकल्पः सत्यधृतिः सर्वगन्धः सर्वरसः सर्वा अनु दिशः प्रभूतः

cal aspect; the *prāṇa* is the eater and for him the food are the *āhitas* (share) for the *prāṇa* consumes food. Thus both these eater and eaten are of Agni.

3. Now about *Arka* (effulgence) – Agni is *Arka* and his *kāma* (satiation) are the oblations; for the oblations are indeed cause of pleasure to Agni. The sun is *Arka* and the moon is his *kāma* (pleasure); because the moon is the cause of satiation for the sun. This is the divine aspect. Now from the physical angle; the *prāṇa* is *Arka* and his *kāma* (satiation) is by food, for the food is the (cause of) pleasure for the *prāṇa*. Thus both these, the eater and eaten are of *Arka*.

4. Now about the *uktha* (*Sāman* praise) – Agni is the *uk* and its *tham* is the oblations; because it is by the oblations that Agni rises up in glow. The sun is the *uk* and the moon is the *tham*; for it is by the moon that the sun rises up. This is the divine point of view. Now about the physical aspect. The *prāṇa* is the *uk* and food its *tham* – because it is by food that *prāṇa* rises up. Thus both these, the eater and the eaten are of *uktha*. That in the form of Agni, that in the form of *Arka* and that in the form of *uktha*, is this Puruṣa. Whosoever knowing this, thus worships the Puruṣa in the form of Agni, in the form of *Arka*, and in the form of *uktha*, his enemy withers away.

5. By *prāṇa*, Agni shines; by Agni, Vāyu shines; by Vāyu, Āditya; by Āditya, the moon; by the moon, the stars and by the stars the lightning; so much is the shining, both in this world and in the yonder world. Whosoever knows this, shares with all these effulgences in this world as well as in yonder world. (Second Brāhmaṇa Ends.)

## BRĀHMAṆA III

1. Meditate upon Brahman (the cause of creation, sustenance and destruction of this universe) as truth (eternal). Man is indeed the product of his will. How great his will with which he departs from this world, with that much will, he on passing away, appears in yonder world. Meditate upon the Ātman (self) which is made up of intelligence, endowed with aerial body, with an effulgent form, with an etheriel nature, with its shape changing at its will, swift as thought, with an unfailing resolve, firm in its purpose, having all odours, all tastes with its authority over all regions, pervading this whole universe, speechless and unattached. Even as a grain of rice, a grain

सर्वमिदमभ्यात्तमवाक्कमनादरं यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वैवमयमन्तरात्मन्पुरुषो हिरण्मयो यथा ज्योतिरधूममेवं ज्यायान्दिवो ज्यायानाकाशाज्ज्यायानस्यै पृथिव्यै ज्यायान्त्सर्वेभ्यो भूतेभ्यः स प्राणस्यात्मैष म आत्मैतमित आत्मानं प्रेत्याभिसंभविष्यामीति यस्य स्यादद्धा न विचिकित्सास्तीति ह स्माह शाण्डिल्य एवमेतदिति॥१॥इति तृतीयं ब्राह्मणम्॥

॥ इति षष्ठोऽध्यायः ॥

॥ इति अग्निरहस्यकाण्डं समाप्तम् ॥

of barley or a grain of millet or the smallest granule of millet, so is this golden Puruṣa in the heart; like an effulgence without smoke. He is bigger than the sky, bigger than the ether and greater than all existing things – that Ātman of the *prāṇa* is my Ātman (self). On departing from this body, I shall emerge as that (self). Verily whosoever has this determination shall not waver – so said Śāṇḍilya and thus it is. (Third Brāhmaṇa Ends.)

**(Chapter Six Ends.)**

**(AGNIRAHASYA KĀṆḌA ENDS)**

# अष्टाध्यायीकाण्डम्

## प्रथमोऽध्यायः

### प्रथमं ब्राह्मणम्

संवत्सरो वै यज्ञः प्रजापतिस्तस्यैतद्द्वारं यदमावास्या चन्द्रमा एव द्वारपिधानः स योऽमावास्यायामग्नी आधत्ते यथा विवृतायां द्वारि द्वारा पुरं प्रपद्येत स तत एव स्वर्गं लोकमियादेवं तद्योऽमावास्यायामाधत्ते॥१॥

अथ यो नक्षत्र आधत्ते यथापिहितायां द्वार्यद्वारा पुरं प्रपित्सेत्स जिह्मः पुरः स्यादेवं तद्यो नक्षत्र आधत्ते तस्मान्नक्षत्र आदधीत यदहरेवैष न पुरस्तान्न पश्चाद्दृश्येत तदहरुपवसेत्तर्हि ह्येष इमं लोकमागच्छति तस्मिन्निह वसति॥२॥

सर्वे देवा वसन्ति सर्वाणि भूतानि सर्वा देवताः सर्व ऋतवः सर्वे स्तोमाः सर्वाणि पृष्ठानि सर्वाणि छन्दाꣳसि सर्वेषु ह वा अस्य देवेषु सर्वेषु भूतेषु सर्वासु देवतासु सर्वेष्वृतुषु सर्वेषु स्तोमेषु सर्वेषु पृष्ठेषु सर्वेषु छन्दःस्वग्नी॥३॥

आहितौ भवतो योऽमावास्यायामाधत्ते तस्मादमावास्यायामेवाग्नी आदधीत योऽसौ वैशाखस्यामावास्या तस्यामादधीत सा रोहिण्या संपद्यत आत्मा वै प्रजा पशवो रोहिण्यात्मन्येवैतत्प्रजायां पशुषु प्रतितिष्ठत्यमावास्या वा अग्न्याधेयरूपं तस्मादमावास्यायामेवाग्नी आदधीत पौर्णमास्यामन्वारभेतामावास्यायां दीक्षेत॥४॥इति प्रथमं ब्राह्मणम्॥

# AṢṬĀDHYĀYĪ KĀṆḌA

## Chapter 1

### BRĀHMAṆA I

**1.** Surely Prajāpati is the year, that is the sacrifice. The new-moon night is its opening and the moon itself is the bolt of the door. When one kindles the two fires on *amāvāsyā*, it is just as one would reach a city through the gateway when the doors are open. He who kindles (the fires) on *amāvāsyā*, reaches the heaven.

**2.** If one kindles the fires under a (particular) *nakṣastra*, it is like one trying to get into a fortress with closed gates, through some other way and fails to get entry. This is how one lays down the fires under a *nakṣastra*. Let him not therefore kindle the fires under a *nakṣastra*. On that very day when he(the moon) will not be visible at the East or at the West, that day he should fast, for it is on that day the moon comes down to this world and on that day he stays put here.

**3.** All the gods stay here, all *bhūtas*, all deities, all seasons, all *stomas*, all *pṛṣṭhās* and the metres; because the two fires are set up for (in service of) all gods, all *bhūtas*, all deities, all seasons, all *stomas*, all *pṛṣṭhās* and all metres.

**4.** The two fires become well set-up only when laid down on *amāvāsyā*. Therefore one should lay down the two fires only on *amāvāsyā* day. Let him set them up on the *amāvāsyā* in the month of Vaiśākha. It coincides with the Rohiṇī *nakṣatra*; for Rohiṇī is the self, the offspring and the cattle. This means they get established in one's self, in the offspring and in the cattle. Indeed *amāvāsyā* is the form of *Agnyādheya*. Let him therefore set up the fires on *amāvāsyā*. On the full-moon day, let him perform the preliminary rites and the *Dīkṣā* on the *amāvāsyā* day. (First Brāhmaṇa Ends.)

## द्वितीयं ब्राह्मणम्

अद्यामावास्येति मन्यमान उपवसत्यथैष पश्चाद्ददृशे स हैष दिव्यः श्वा स यजमानस्य पशूनभ्यवेक्षते तदपशव्यꣳ स्यादप्रायश्चित्तिकृत एतस्मादु हैतद्भीषावचन्द्रमसादिति छायामुपसर्पन्त्येतेनो हैतदुपतपदाचक्षते श्वलुचितमित्येतमु हैवैतदाचक्षते शशश्चान्द्रमस इति चन्द्रमा वै सोमो देवानामन्नं तं पौर्णमास्यामभिषुण्वन्ति[1]सोऽपरपक्षेऽप ओषधीः प्रविशति पशवो वा आप ओषधीरदन्ति तदेवमेताꣳ रात्रिं पशुभ्यः सन्नयति सोऽद्यामावास्येति मन्यमान उपवसत्यथैष पश्चाद्ददृशे तद्यजमानो यज्ञपथादेति॥१॥

तदाहुः कथं कुर्यादित्वा यज्ञपथाद्यजतो[2] ३ न यजेता ३ इति यजेत हैव न ह्यन्यदपक्रमणं भवति श्वः-श्व एवैष ज्यायानुदेति स आमावास्यविधेनैवेष्ट्वाथेष्टिमनुनिर्वपति तदहर्वैव श्वो वा॥२॥

तस्य त्रीणि हवीꣳषि भवन्त्यग्नये पथिकृतेऽष्टाकपालं पुरोळाशमिन्द्राय वृत्रघ्न एकादशकपालमग्नये वैश्वानराय द्वादशकपालं पुरोळाशम्॥३॥

स यदग्नये पथिकृते निर्वपत्यग्निर्वै पथः कर्ता स यस्मादेवादो यजमानो यज्ञपथादेति तमेनमग्निः पन्थानमापादयत्यथ यदिन्द्राय वृत्रघ्ने पाप्मा वै वृत्रो यो भूतेर्वारयित्वा तिष्ठति कल्याणात्कर्मणः साधोस्तमेतद्रिन्द्रेणैव वृत्रघ्ना पाप्मानं वृत्रꣳ हन्ति तस्मादिन्द्राय वृत्रघ्नेऽथ यदग्नये वैश्वानराय द्वादशकपालं पुरोळाशं निर्वपति यत्र वा इन्द्रो वृत्रमहꣳ स्तमग्निना वैश्वानरेण समदहत्तदस्य सर्वं पाप्मानꣳ समदहत्तथो एवैष एतदिन्द्रेणैव वृत्रघ्ना पाप्मानं वृत्रꣳ हत्वा तमग्निना वैश्वानरेण

१.पौर्णमास्या अभिषुण्वन्ति TE, V1
२.यजेता ३ J, MD

**BRĀHMAṆA II**

1. Thinking "today is the *amāvāsya*" he observes the fast and then it (the moon) is seen in the west. That (moon) is indeed the heavenly dog who watches the cattles of the Yajamāna and that may not be for the good of the cattle if atonement is not made. Afraid of that moon, they hide themselves in the shade and that is why they call that feeling of suffering (on the part of the cattle) as *Śvalucitam* (dog's clutch) and also call it the hare of the moon. The moon is indeed the Soma which is the food of the gods. They extract out of him (by pressing) on the full-moon day and the next fortnight he (Soma) enters the waters and plants. The cattle feed on the waters and plants. During that night (of *amāvāsya*) he collects him (Soma) from the cattle. So when the Yajamāna enters fast thinking "today is *amāvāsya*" and later sees (the moon) he swerves from the path of sacrifice.

2. Now they ask, "What should he do if he swerves from the path of sacrifice?" "Should he proceed with the *yāga* or should he not?" He should certainly perform the sacrifice; there is no other alternative. Because on the subsequent days he (the moon) will be rising up still bigger each day. He should perform the sacrifice strictly at an *amāvāsya* sacrifice and supplement it with an *iṣṭi* (atoning offering) on the same day or on the following day.

3. This *iṣṭi* (of atonement) has three oblations; *puroḍāśa* in eight potsherds for Agni, the way-finder (*Pathikṛt*); *puroḍāśa* in eleven potsherds for Indra, the killer of Vṛtra and *puroḍāśa* in twelve potsherds for Agni, the Vaiśvānara.

4. When he offers to Agni, the *Pathikṛt*; since Agni is the maker of the path, the Yajamāna who has (earlier) swerved from the path of sacrifice, him he puts back on the path. When he offers to Indra, the killer of Vṛtra, he destroys the sin with the aid of Indra the Vṛtraghna. Because Vṛtra is indeed the sin which stands obstructing prosperity, auspiciousness and good deed. So the offering to Indra, the killer of Vṛtra, when he offers *puroḍāśa* in twelve potsherds to Agni, the Vaiśvānara, he completely burns the sin. When Indra killed Vṛtra, he burnt him completely by Agni, Vaiśvānara and thereby burnt all the sins of Vṛtra. In like manner, having killed the sin

संदहति तदस्य सर्वं पाप्मानꣳ संदहति स यो हैवं विद्वानेतयेष्ट्या यजते न हास्याल्पश्च न पाप्मा परिशिष्यते॥४॥

तस्यै सप्तदश सामिधेन्यो भवन्त्युपांꣳशु देवता यजति याः कामयते ता याज्यानुवाक्याः करोत्येवमाज्यभागावेवꣳ संयाज्ये॥५॥

तिसृधन्वं दक्षिणां ददाति धन्वना वै श्वानं बाधन्ते तदेतमेवैतद्बाधते यत्तिसृधन्वं दक्षिणां ददाति॥६॥

दण्डं दक्षिणां ददाति दण्डेन वै श्वानं बाधन्ते तदेतमेवैतद्बाधते यद्दण्डं दक्षिणां ददात्येषान्वादिष्टा दक्षिणा दद्यात्त्वेवास्यामप्यन्यद्या इतरा दक्षिणास्तासां यत्संपद्येत सा हैषा पशव्येष्टिस्तयाप्यनभ्यद्दृष्टो यजेतैव॥७॥इति द्वितीयं ब्राह्मणम्॥

## तृतीयं ब्राह्मणम्

तद्वा अदो व्रतोपायन उद्यते यदि नाश्नाति पितृदेवत्यो भवति यद्यु अश्नाति देवानत्यश्नातीति तदारण्यमश्नीयादिति तत्र स्थापयन्ति स यदि ग्राम्या ओषधीरश्नाति पुरोळाशस्य मेधमश्नाति यद्यारण्या ओषधीरश्नाति बर्हिषो मेधमश्नाति यदि वानस्पत्यमश्नातीध्मस्य मेधमश्नाति यदि पयः पिबति सान्नाय्यस्य चाज्यस्य च मेधमश्नाति यद्यपः पिबति प्रणीतानां मेधमश्नाति यदि नाश्नाति पितृदेवत्यो भवति॥१॥

तदाहुः किमयनमिति स्वयꣳ हैवैते रात्री अग्निहोत्रं जुहुयात्स यद्धुत्वा प्राश्नाति तेनापितृदेवत्यो भवत्याहुतिर्वा एषा स यदेवैतामात्मन्नाहुतिं जुहोति तेनो एतेषां मेधानां नाश्नात्येते ह

(Vṛtra), the Yajamāna burns it with the help of Agni-Vaiśvānara. One who knowing this performs this *iṣṭi*, even slightest sin does not remain in him.

**5.** For this there are seventeen *sāmidhenis*. He offers to the deities in a muffled voice. Whichever verses at his will he uses for *yājyānuvākyās*, same way for Ājyabhāgas and for Sviṣṭakṛt offerings.

**6.** A bow with three arrows, he gives as *dakṣiṇā* for this. For, a dog is driven away with a bow. He (the Yajamāna) thus drives away that (dog, the moon) by giving a bow with three arrows as *dakṣiṇā*.

**7.** He gives a stick as *dakṣiṇā*; for a dog is driven away by a stick. So too he drives away (that dog, the moon) by giving a stick as *dakṣiṇā*. These are the prescribed *dakṣiṇās*. He may as well give away other *dakṣiṇā* as may be at his disposal. This offering is indeed for the well-being of the cattle. He may perform it even if he has not seen the moon after fasting on (the *amāvāsyā* night). (Second Brāhmaṇa Ends.)

**BRĀHMAṆA III**

**1.** Now when he prepares for the fast, it is said, If he does not eat, he will be one who honours the *pitṛs* as gods and if he eats he will be by-passing the gods. So they ordain that he may eat what grows in the forest. If he eats cultivated agricultural produce, it amounts to his eating the essence of the *puroḍāśa*. If he eats what is widely grown, he eats the essence of the *barhis* grass. If he eats what is procured from trees, he eats the essence of the sacrificial *samidhās*. If he consumes milk, it will amount to, consuming the essence of the *Sānnāya* and the *ghee*. If he drinks water he is consuming the essence of the *Prāśitra* waters (all these being utilised in the sacrifice, his eating any of these, amounts to his tasting them before they are offered to the gods). If he refrains from eating (any thing) it amounts to his honouring only the *pitṛs* as deities.

**2.** Now they ask "what is the solution for this?" Well let him on those two nights (of *paurṇimā* and *amāvāsyā*) take the Agnihotra offerings. When he eats after offering that, he does not become one who has honoured the *pitṛs* as deities (he becomes eligible to worship the gods as well). Because that offering (in Agnihotra) is offering unto himself and by that he does

वै रात्री सर्वा रात्रयः समवयन्ति या आपूर्यमाणपक्षस्य रात्रयस्ताः सर्वाः पौर्णमासीꣳ समवयन्ति या अपक्षीयमाणपक्षस्य रात्रयस्ताः सर्वा अमावास्याꣳ समवयन्ति स यो हैवं विद्वान्त्स्वयमुपवसथे जुहोति सर्वदा हैवास्य स्वयꣳ हुतं भवति॥ २॥इति तृतीयं ब्राह्मणम्॥

## ॥ इति प्रथमोऽध्यायः ॥

not become one who eats the essence of those (sacrificial) items. Because all the nights are contained in these two nights. All the nights of the waxing moon concentrate in the nights of *paurṇamāsa* and all the nights of the waning moon are in the *amāvāsayā* night. He who knows thus and offers himself the Agnihotra on the day he enters the fast, becomes one who has performed Agnihotra on all the days (even though he might have got it performed through a proxy on other days). (Third Brāhmaṇa Ends.)

**(Chapter One Ends.)**

# द्वितीयोऽध्यायः

## प्रथमं ब्राह्मणम्

संवत्सरो यज्ञः स यो ह वै संवत्सरो यज्ञ इति वेदान्ते हैवास्य संवत्सरस्येष्टं भवत्यथो यत्किञ्च संवत्सरे क्रियते सर्वꣳ हैवास्य तदाप्तमवरुद्धमभिजितं भवति॥१॥

ऋतव ऋत्विजः स यो ह वा ऋतव ऋत्विज इति वेदान्ते हैवास्यर्तूनामिष्टं भवत्यथो यत्किञ्चर्तुषु क्रियते सर्वꣳ हैवास्य तदाप्तमवरुद्धमभिजितं भवति॥२॥

मासा हवीꣳषि स यो ह वै मासा हवीꣳषीति वेदान्ते हैवास्य मासानामिष्टं भवत्यथो यत्किञ्च मासेषु क्रियते सर्वꣳ हैवास्य तदाप्तमवरुद्धमभिजितं भवति॥३॥

अर्धमासा हविष्पात्राणि स यो ह वा अर्धमासा हविष्पात्राणीति वेदान्ते हैवास्यार्धमासानामिष्टं भवत्यथो यत्किञ्चार्धमासेषु क्रियते सर्वꣳ हैवास्य तदाप्तमवरुद्धमभिजितं भवति॥४॥

अहोरात्रे परिवेष्ट्री स यो ह वा अहोरात्रे परिवेष्ट्री इति वेदान्ते हैवास्याहोरात्रयोरिष्टं भवत्यथो यत्किञ्चाहोरात्रयोः क्रियते सर्वꣳ हैवास्य तदाप्तमवरुद्धमभिजितं भवति॥५॥

इयमेव प्रथमा सामिधेन्यग्निर्द्वितीया वायुस्तृतीयान्तरिक्षं चतुर्थी द्यौः पञ्चम्यादित्यः षष्ठी चन्द्रमाः सप्तमी मनोऽष्टमी वाङ्नवमी तपो दशमी ब्रह्मैकादश्येता हि वा इदꣳ सर्वꣳ समिन्धत एताभिरिदꣳ सर्वꣳ समिद्धं तस्मात्सामिधेन्यो नाम॥६॥

स वै त्रिः प्रथममन्वाह स यत्प्रथममन्वाह प्राचीं तेन दिशं जयति यद्द्वितीयं दक्षिणां तेन दिशं जयति यत्तृतीयमूर्ध्वामेव तेन दिशं जयति॥७॥

## Chapter Two

### BRĀHMAṆA I

1. Verily the year is sacrifice. One who, knowing that the year is sacrifice, offers sacrifice at the end of the year, by him all that is done in the year becomes attained, secured and won for him.

2. The officiating priests are the seasons. One who, knowing that the officiating priests are the seasons and offers sacrifice at the end of the seasons, by him, all that is done in the seasons, becomes attained, secured, and won for him.

3. The oblations are the months, one who, knowing that the oblations are the months and offers sacrifice at the end of the months, by him all that is done in the month becomes attained, secured and won for him.

4. The oblation vessels are the fortnights. One who, knowing that the oblation vessels are the fortnights, offers sacrifice at the end of the fortnights, by him, all that is done in the half-months becomes attained, secured and won for him.

5. The *pariveṣṭrīs* (the pair of fire-tongs) are the day and night; one who, having known that the *pariveṣṭrīs* are the day and night; and offers sacrifice at the end of the day and night, by him all that is done in the day and night becomes attained, secured and won for him.

6. The first *sāmidheni* (kindling formula) is this earth; the second one is the fire; the third, the Vāyu; the fourth, the aerial region; the fifth one, the sky; the sixth, the sun; the seventh is the moon; the eighth is the mind; ninth the speech; the tenth is intense *tapas* and the eleventh is the Brahman. For, it is these that kindle, all this (universe) and by them all this is kindled. That is why these are called *sāmidhenis* or kindling formulae.

7. He recites the first (*sāmidheni*) three times. By reciting it first time, he conquers the eastern region; by the second time he gains the southern region and by the third recitation he gains the upper region.

त्रिर्वेवोत्तमामन्वाह स यत्प्रथममन्वाह प्रतीचीं तेन दिशं जयति यद्द्वितीयंमुदीचीं तेन दिशं जयति यत्तृतीयमिमामेव तेन प्रतिष्ठां जयत्येवमु हाभिरिमाँल्लोकाञ्जयत्येता दिशः॥८॥

ऋतमेव पूर्व आघारः सत्यमुत्तरोऽव ह वा ऋतसत्ये रुन्धेऽथो यत्किञ्चर्तसत्याभ्यां जय्यꣳ सर्वꣳ हैव तज्जयति॥९॥

त्विषिरेव प्रथमः प्रयाजोऽपचितिर्द्वितीयो यशस्तृतीयो ब्रह्मवर्चसं चतुर्थोऽन्नाद्यं पञ्चमः स प्रथमं प्रयाजमनुमन्त्रयेत त्विषिमान्भूयासमित्यपचितिमान्भूयासमिति द्वितीयं यशस्वी भूयासमिति तृतीयं ब्रह्मवर्चसी भूयासमिति चतुर्थमन्नादो भूयासमिति पञ्चमं त्विषिमान्ह[1] वा अपचितिमान्यशस्वी ब्रह्मवर्चस्यन्नादो भवति य एवमेतद्वेदैतद्ध[2] स्म वैतद्विद्वानाह श्वेतकेतुरारुणेयः कꣳस्विदेवापरीषुमहानागमिवाभिसꣳसारं दिदृक्षितारो य एवमेत प्रयाजानां यशो वेदितेति॥१०॥

भूतमेव पूर्व आज्यभागो भविष्यदुत्तरोऽव ह वै भूतं च भविष्यच्च रुन्धेऽथो यत्किञ्च भूतेन च भविष्यता च जय्यꣳ सर्वꣳ हैव तज्जयति॥११॥

ब्रह्माग्नेयः पुरोळाशः स यो ह वै ब्रह्माग्नेयः पुरोळाश इति वेदाव ह ब्रह्म रुन्धेऽथो यत्किञ्च ब्रह्मणाꣳ जय्य सर्वꣳ हैव तज्जयति॥१२॥

क्षत्रमुपाꣳशुयाजः स यो ह वै क्षत्रमुपाꣳशुयाज इति वेदाव ह क्षत्रꣳ रुन्धेऽथो यत्किञ्च क्षत्रेण जय्यं सर्वꣳ हैव तज्जयति तद्यदुपाꣳशुयाजं कुर्वन्त्येकेनैके तस्मादुच्चैश्चोपाꣳशु च क्षत्रायाचक्षते॥१३॥

विळुत्तरः पुरोळाशः स यो ह वै विळुत्तरः पुरोळाश इति वेदाव ह विशꣳ रुन्धेऽथो यत्किञ्च क्षत्रेण जय्यं सर्वꣳ हैव तज्जयति तद्यदाग्नेयश्च पुरोळाश उपाꣳशुयाजश्च पूर्वौ भवतस्तस्मादुभे ब्रह्म च क्षत्रं च विशि प्रतिष्ठिते॥१४॥

१.त्विंमिान्हि वा TE
२.एवमेतद्वेतद्ध

**8.** He recites the last (*sāmidheni*) three times. By reciting it first time, he conquers the western region; by the second time, he wins the northern region and by the third recitation he gains this (earth) itself as a resting place. Thus by these *sāmidhenis,* he gains these worlds and these regions.

**9.** The first *āghāra* (libation of *ghee*) is *ṛta,* the Eternal Law; the second one is *satya* or Truth and by these (*ghee* libations) he attains both *ṛta* and *satya* and he now gains all that is attainable by *ṛta* and *satya.*

**10.** The first *prayāja* (fore-offering) is effulgence; the second one is honour; the third is fame; the fourth is brahminical lustre and the fifth is food etc. The first *prayāja* is to be followed by his uttering, "Let me become effulgent"; the second to be followed by uttering, "Let me be honoured"; the third "let me be famous", the fourth "let me gain brahminic lustre" and the fifth to be followed by uttering "let me enjoy prosperity." Verily whosoever knows this becomes effulgent, honoured, famous, possessed of brahminical lustre and prosperous. Now knowing this, Śvetaketu Āruṇeya, once said, "People from all directions will one day converge on that one who knows that the greatness of the *prayājas* (fore-offerings) as if they are eager to see a divine cobra."

**11.** The first *ājyabhāga* is no doubt the past, the second, the future and whatever is attainable by past and future, all that he now gains.

**12.** The *puroḍāśa* offered to Agni is the Brahman (priesthood) and whosoever knows Agni's *puroḍāśa* as Brahman, secures for himself the priesthood and whatever is attainable by priesthood he gains all that.

**13.** The *upāṁśuyāja* (offering made in low voice) is *kṣatra* (martial valour). Whoever knows the *upāṁśuyāja* is *kṣatra* secures for himself the martial valour and whatever is attainable by martial valour, he gains all that. Some perform it as *upāṁśuyāja* (in low voice) and other make the offering in loud voice and that also is for *kṣatra* so they say.

**14.** The second *puroḍāśa* is the *viś* (common folk). Whosoever knows the second *puroḍāśa* as *viś,* secures for himself (the mastery over) the *viś,* whatever is attainable by the commonfolk, he gains all that. In so far as the *puroḍāśa* for Agni and the *upāṁśuyāga* come first, therefore the priesthood (Brahma) and martial class (*kṣatra*) are established on the *viś* (common folk).

राष्ट्रꣳ सान्नाय्यꣳ स यो ह वै राष्ट्रꣳ सान्नाय्यमिति वेदाव ह राष्ट्रꣳ रुन्धेऽथो यत्किञ्च राष्ट्रꣳ राष्ट्रेण जय्यꣳ सर्वꣳ हैव तज्जयति तद्यत्सन्नयन्त्येकेनैक तस्माद्राष्ट्रꣳ सञ्चैति वि च॥१५॥

तपः स्विष्टकृत्स यो ह वै तपः स्विष्टकृदिति वेदाव ह तपो रुन्धेऽथो यत्किञ्च तपसा जय्यꣳ सर्वꣳ हैव तज्जयति॥१६॥

लोकः प्राशित्रꣳ स यो ह वै लोकः प्राशित्रमिति वेदाव ह लोकꣳ रुन्धेऽथो यत्किञ्च लोकं जय्यꣳ सर्वं हैव तज्जयति नो ह लवेन लोकाद्व्यथते लवेन ह वा अमुष्मिꣳल्लोके लोकाद्व्यथन्तेऽथ य एवं वेद स ह बहु चन पापं कृत्वा लोकाद्व्यथते॥१७॥इति प्रथमं ब्राह्मणम्॥

## द्वितीयं ब्राह्मणम्

श्रद्धेळा स यो ह वै श्रद्धेळेति वेदाव ह श्रद्धाꣳ रुन्धेऽथो यत्किञ्च श्रद्धया जय्यꣳ सर्वꣳ हैव तज्जयति॥१॥

अशनिरेव प्रथमोऽनुयाजो ह्रादुनिर्द्वितीय उल्कुषी तृतीयः स प्रथममनुयाजमनुमन्त्रयेताशन्यमुं जहीति यं द्विष्याद्ध्रादुन्यमुं जहीति द्वितीयमुल्कुष्यमुं जहीति द्वितीयꣳ स य एष क्षिप्रं म्रियतेऽशनिर्ह तमनुयाजो हन्त्यथ यो विस्रवन्मिश्र इव ह्रादुनिर्ह तमनुयाजो हन्त्यथ योऽभ्युष्टमिश्र इवोल्कुषी ह तमनुयाजो हन्ति॥२॥

सैषा यज्ञमेनिरे तया वै मेन्या देवा असुरान् पराभावयाञ्चक्रुस्तथो एवैवंविद्यजमानः पाप्मानं द्विषन्तं भ्रातृव्यं पराभावयति॥३॥

**15.** The *sānnāya* (a preparation of fresh milk and curd) is *rāṣṭra* (nationhood). Whosoever knows the *sānnāya* as nationhood, secures himself the (control of) *rāṣṭra* and whatever is attainable by nationhood, he gains all that. Some mix (milk and some curd) together and others do not. Therefore the *rāṣṭra* is both in unitary form and in a federal form.

**16.** The *sviṣṭakṛt* (the well-offered offering) is *tapas* (austerity). Whosoever knows the *sviṣṭakṛt* as *tapas*, secures for himself the *tapas* and whatever is attainable by *tapas*, he gains all that.

**17.** The *prāśitra* (the fore-portion on *avadāna* of that name) is the *loka* (heavenly abode). Whosoever knows *prāśitra* as the *loka*, secures himself the abode in heaven and whatever is attainable by the *loka*, all that he gains. Indeed he does not fall even a little from his abode. Even for a little, people fall from their heavenly abode. But this one (who knows this that *prāśitra* is *loka*) will not fall even if he had committed great sin. (First Brāhmaṇa Ends.)

**BRĀHMAṆA II**

**1.** The *iḍā* is faith; and whosoever realises that commitment to the performance of prescribed rites is *iḍā*, gains (more of that) faith and whatever is to be achieved by faith, he acquires.

**2.** The first *anuyāja* (after-offering) is the thunderbolt, the second one is the hail-storm, and the third *anuyāja* is the meteor. So the first *anuyāja* is followed by the chanting, "O thunderbolt, kill so and so (referring to the one whom he hates)." The second *anuyāja* to be followed by saying "O hailstorm, destroy so and so (referring to the one whom he hates)"; and the third, chanting "O meteor ! smite so and so(referring to him whom he hates)." That one (enemy) who dies soon is killed by that thunderbolt of the *anuyāja*; that one (enemy) who dies with oozing blood, is smitten by the hail-storm of the *anuyāja* and that (enemy) who is burnt all over is struck by the meteor of the *anuyāja*.

**3.** This is the weapon in the form of sacrifice. It is with this weapon, the gods overpowered the Asuras. Hence the Yajamāna who knows thus defeats his sinful hating foe.

यदनुयाजान्तो यज्ञः स्यादशन्यन्तः स्याद्ध्रदुन्यन्तः उल्कुष्यन्तस्तस्माद्वै देवानां यज्ञ इळान्तो वैव शंय्वन्तो वा॥४॥

प्रयाजैर्वै देवाः स्वर्गं लोकमायꣳस्तानसुरा अन्वाजिगाꣳसꣳस्ताननुयाजैः प्रत्यौहꣳस्तद्यदनुयाजा इज्यन्ते पाप्मानमेव तद्द्विषन्तं भ्रातृव्यं यजमानः प्रत्यूहति॥५॥

प्राणा वै प्रयाजा अपाना अनुयाजास्तस्मात्प्रयाजाः प्राञ्चो हूयन्ते तद्धि प्राणरूपं प्रत्यञ्चोऽनुयाजास्तदपानरूपमेता ह वै दर्शपूर्णमासयोरुपसदो यदनुयाजास्तस्मात्त उपसद्रूपेण प्रत्यञ्चो हूयन्ते॥६॥

सꣳस्था सूक्तवाकः स यो ह वै सꣳस्था सूक्तवाक इति वेदाव ह सꣳस्थाꣳ रुन्धेऽथो यत्किञ्च सꣳस्थया जय्यꣳ सर्वꣳ हैव तज्जयति गच्छति वयसः सꣳस्थाम्॥७॥

प्रतिष्ठा शम्योर्वाकः स यो ह वै प्रतिष्ठा शँयोर्वाक इति वेदाव ह प्रतिष्ठाꣳ रुन्धेऽथो यत्किञ्च प्रतिष्ठया जय्यꣳ सर्वꣳ हैव तज्जयति गच्छति प्रतिष्ठाम्॥८॥

ते देवाः एतान्पत्नीसंयाजान्पश्चात्पर्यौहन्त मिथुनमेवैतदुपरिष्टाददधत प्रजात्यै तद्यत्पत्नीसंयाजा इज्यन्ते मिथुनमेवैतदुपरिष्टाद्धत्ते प्रजात्यै देवानाꣳ ह वै प्रजातिमनु प्रजायते मिथुनेन मिथुनेन ह प्रजायते य एवमेतद्वेद॥९॥

अन्नꣳ समिष्टयजुः स यो ह वा अन्नꣳ समिष्टयजुरिति वेदाव हान्नꣳ रुन्धेऽथो यत्किञ्चान्नेन जय्यꣳ सर्वꣳ हैव तज्जयति॥१०॥

**4.** If the sacrifice is to end with *anuyājās*, it will be ending with the thunderbolt or hail-storm or meteor. (Since it is not desirable to end a sacrifice with the discharge of a weapon), therefore the sacrifice of the gods end with *iḍā* or with *śaṁyvanta*.

**5.** Indeed, by the *prayājās* (fore-offerings) the gods reached the heavenly world. The Asuras tried to reach there after them and the gods drove them back by the *anuyājās* (after-offerings). Thus when the Yajamāna offers the *anuyājās*, he repels that sinful, hating enemy.

**6.** The *prayājās* (fore-offerings) are the *prāṇas* (out-breathing). The *anuyājās* (after-offerings) are the *apānas* (off-breathing). That is why the *prayājās* are offered in front (forward direction) because that is the direction of *prāṇa*. The *anuyājas* are offered in the back (backward direction) because that is the direction of *apāna*. These (*anuyājās*) are the *upasads* of the new-moon and full-moon sacrifices (i.e. the three *upasad* offerings to Agni, Soma and Viṣṇu). So here (too) they are offered in the backward direction (as done while offered as *upasads* in the *Soma* sacrifice).

**7.** The *sūktavāka* is the termination and whosoever knows the *sūktavāka* as marking the end, gains the completion (of the sacrifice) and whatever is obtainable by completion, he gains all that and lives upto the end of his life-span.

**8.** The *śamyorvāka* is the resting point. Whosoever knows the *śamyorvāka* as marking the resting point, he gains the resting place and whatever is obtainable by the *pratiṣṭhā* (getting firmly established in the resting point), all that he attains and gets himself firmly established.

**9.** The gods protected the *patnīsaṁyājās* from behind and placed a productive pair thereon for the sake of procreation. Thus when he offers the *patnīsaṁyājās* he is only placing a productive pair thereon for the sake of procreation. By this, just as in the case of gods, offspring is produced (for the Yajamāna). For him who knows this, offspring is produced pair after pair.

**10.** The *samiṣṭayajus* is the food — whosoever knows the *samiṣṭayajus* as food, gains food. Whatever is obtainable by food, he attains all that.

संवत्सरो यजमानस्तमृतवो याजयन्ति वसन्त आग्नीध्रस्तस्माद्वसन्ते दावाश्चरन्ति तद्ध्यग्निरूपं ग्रीष्मोऽध्वर्युस्तप्त इव वै ग्रीष्मस्तप्तमिवाध्वर्युर्निष्क्रामति वर्षा उद्गाता तस्माद्यदा बलवद्वर्षति साम्न इवोपब्दिः क्रियते शरद्ब्रह्मा तस्माद्यदा सस्यं पच्यते ब्रह्मण्वत्यः प्रजा इत्याहुर्हेमन्तो होता तस्माद्धेमन्वषट्कृताः पशवः सीदन्त्येता ह वा एनं देवता याजयन्ति स यद्येनमैषावीरा याजयेयुरेता एव देवता मनसा ध्यायेदेता हैवैनं देवता याजयन्ति॥११॥

अथ हैषैव[1] तुला यद्दक्षिणो वेद्यन्तः स यत्साधु करोति तदन्तर्वेद्यथ यदसाधु तद्बहिर्वेदि तस्माद्दक्षिणं वेद्यन्तमधिस्पृश्येवासीत तुलायाꣳ ह वा अमुष्मिँल्लोक आदधाति यतरद्यꣳस्यति तदन्वेष्यति यदि साधु वासाधु वेत्यथ य एवं वेदास्मिन्हैव लोके तुलामारोहत्यमुष्मिँल्लोके तुलाधानं मुच्यते साधुकृत्या हैवास्य यच्छति न पापकृत्या॥१२॥ इति द्वितीयं ब्राह्मणम्॥

॥ इति द्वितीयोऽध्यायः ॥

१. हैषैष V2

**11.** The Yajamāna is the year. The seasons cause him to perform sacrifice. The Āgnīdhra is the spring season; that is why the forest conflagrations occur during spring. That is a form of Agni. The Adhvaryu is the summer; because the summer is scorched as it were. The Adhvaryu emerges (from the sacrificial site) as if scorched. The Udgātā is the rainy season and that is why when it heavily rains, it sounds as if *Sāman* is chanted. The Brahmā is the autumn. That is why when the crops ripen they say the creatures are said to have become prosperous. The Hotā is the winter and that is why during winter, the cattle cry in anguish as if uttering *vaṣaṭ*. Thus the Yajamāna who is the year is caused to perform sacrifice by these deities in the form of the seasons. He who meditates upon these deities as those that cause him to perform the sacrifice, is caused to do so (enable him to perform) by these deities even if not fully qualified priests officiate for him.

**12.** Now what constitutes the balance ? The right end of the *vedī* (is the balancing point). Whatever good deed the Yajamāna does, that is inside the *vedī* and whatever evil deeds he does, falls outside the *vedī*. Let him therefore, touch the right edge of the *vedī* while seated. Is he not mounted on the balance in the yonder world (to weigh his good and bad deeds)? Whichever side is prominent, he follows that, whether it is good, or bad. Verily, he who knows this, mounts the balance here itself (ensures that he is on the heavier pan of good deeds) and escapes being weighed in the balance in the yonder world. For; his good deeds become weightier and not his evil deeds. (Second Brāhmaṇa Ends.)

**(Chapter Two Ends.)**

# तृतीयोऽध्यायः

## प्रथमं ब्राह्मणम्

ओं यो ह वा अग्निहोत्रे षण्मिथुनानि वेद मिथुनेन-मिथुनेन ह प्रजायते सर्वाभिः प्रजातिभिर्यजमानश्च पत्नी च तदेकं मिथुनं तस्मादस्य पत्नीवदग्निहोत्रꣳ स्यादेतन्मिथुन-मुपाप्रवानीति वत्सश्चाग्निहोत्री च तदेकं मिथुनं तस्मादस्य पुंवत्साग्निहोत्री स्यादेतन्मिथुनमुपा-प्रवानीति स्थाली चाङ्गाराश्च तदेकं मिथुनꣳ स्रुक्च स्रुवश्च तदेकं मिथुनमाहवनीयश्च समिच्च तदेकं मिथुनमाहुतिश्च स्वाहाकारश्च तदेकं मिथुनमेतानि ह वा अग्निहोत्रे षण्मिथुनानि तानि य एवं वेद मिथुनेन मिथुनेन ह प्रजायते सर्वाभिः प्रजातिभिः॥१॥ इति प्रथमं ब्राह्मणम्॥

## द्वितीयं ब्राह्मणम्

ब्रह्म वै मृत्यवे प्रजाः प्रायच्छत्तस्मै ब्रह्मचारिणमेव न प्रायच्छत्सोऽब्रवीदस्तु मह्यमप्येतस्मिन्भाग इति यामेव रात्रिꣳ समिधं नाहराता इति तस्माद्याꣳ रात्रिं ब्रह्मचारी समिधं नाहरत्यायुष एव तामवदाय वसति तस्माद्ब्रह्मचारी समिधमाहरेन्नेदायुषोऽवदाय वसानीति॥१॥

दीर्घसत्रं वा एष उपैति यो ब्रह्मचर्यमुपैति स यामुपयन्त्समिधमादधाति सा प्रायणीया याꣳ स्नास्यन्त्सोदयनीयाथ या अन्तरेण सत्र्या एवास्य ता ब्राह्मणो ब्रह्मचर्यमुपयन्॥२॥

चतुर्धा भूतानि प्रविशत्यग्निं पदा मृत्युं पदाचार्यं पदात्मन्येवास्य चतुर्थः पादः परिशिष्यते॥३॥

## Chapter Three

### BRĀHMAṆA I

**1.** Whosoever knows the six pairs in the Agnihotra, bequeaths offspring by pair after pair in all generations. The Yajamāna and his wife — this forms one pair, by which his Agnihotra becomes possessed of a wife. He thinks "let me obtain this pair." The calf and the Agnihotra cow — this forms the second pair; by this his Agnihotra cow becomes possessed of a male-calf. He thinks "May I obtain this pair." The *sthālī* (pot) and the red hot embers — this is another pair. The *sruk* and the *sruva* — this forms one pair. The *āhavanīya* fire and the *samidhā* — this is yet another pair. The oblation and the *svāhākāra* (uttering of *svāhā*) — this is one pair. These are the six pairs in Agnihotra. He who knows these as such has offspring born to him pair after pair, by all generations. (First Brāhmaṇa Ends.)

### BRĀHMAṆA II

**1.** The Brahman handed over the creatures to death. Only the *brahmacārin* (the student of Vedas) he did not give away (to death). He (death) said, "Let me have a share in this (*brahmacārin*) too." (Brahmā said) "Only on that night when he fails to bring *samidhās* (he too shall be your share)." So, on whichever night the *brahmacārin* does not bring *samidhā* (to his *gurukula*) that (night) he exists by cutting out of his life-span (that might reduce his life-span by one day). Therefore the *brahmacārin* should fetch *samidhās* (daily) otherwise he lives (each such night) by cutting it from the span of his life.

**2.** He who enters the *brahmacarya* is indeed entering a long sacrificial session. The *samidhā* that he places on the fire while entering (*brahmacarya āśrama*) that is the *prāyaṇīyā* offering (opening offering at a *Dīrgha satra*). That which he offers before he bathes (to mark the end of his student life) is the *udayanīya* (concluding oblation of the *Dīrgha satra*). Those *samidhās* he offers in between these two (the beginning and closing offerings) are those that belong to the *satra* (the sacrificial session). When a brahmin lad enters the *brahmacarya* (studentship)—

**3.** (He) enters the living beings dividing himself into four; with a quarter enters the fire, with one quarter he enters death; with one quarter he enters his preceptor; the fourth quarter remains in his own self.

स यदग्नये समिधमाहरति य एवास्याग्नौ पादस्तमेव तेन परिक्रीणाति तꣳ सꣳस्कृत्यात्मन्धत्ते स एनमाविशति॥४॥

अथ यदात्मानं दरिद्रीकृत्येवाह्रीर्भूत्वा भिक्षते य एवास्य मृत्यौ पादस्तमेव तेन परिक्रीणाति तꣳ सꣳस्कृत्यात्मन्धत्ते स एनमाविशति॥५॥

अथ यदाचार्यवचसं करोति यदाचार्याय कर्म करोति य एवास्याचार्ये पादस्तमेव तेन परिक्रीणाति तꣳ सꣳस्कृत्यात्मन्धत्ते स एनमाविशति॥६॥

न ह वै स्नात्वा भिक्षेताप ह वै स्नात्वा भिक्षां जयत्यप ज्ञातीनामशनायामप पितृणाꣳ स एवं विद्वान्यस्या एव भूयिष्ठꣳ श्लाघेत तां भिक्षेतेत्याहुस्तल्लोक्यमिति स यद्यन्यां भिक्षितव्यां न विन्देदपि स्वामेवाचार्य जायां भिक्षेताथो स्वां मातरं नैनꣳ सप्तम्य भिक्षितातीयात्तमेवं विद्वाꣳसमेवं चरन्तꣳ सर्वे वेदा आविशन्ति यथा ह वा अग्निः समिद्धो रोचत एवꣳ ह वै स स्नात्वा रोचते य एवं विद्वान् ब्रह्मचर्यं चरति॥७॥इति द्वितीयं ब्राह्मणम्॥

॥ इति तृतीयोऽध्यायः ॥

**4.** In so far as he fetches *samidhās* for Agni; by that he gets back his own quarter which has gone into the fire. Having polished it he takes it, unto his own self. That quarter enters him.

**5.** In so far as he subjects himself to poverty as it were and without any sense of shame begs for food (*bhikṣācaraṇa*), by that he reclaims that quarter of his which had entered death. Having polished it, he puts it into himself. That quarter enters him.

**6.** In so far as he obeys the biddings of his preceptor, and does service unto the *ācārya*, by that he redeems that quarter of his which had entered into the preceptor. Having polished it, he puts it unto himself. It enters him.

**7.** After the final ablution (marking the completion of studenthood) he shall not beg for his food. Because by the final ablution he drives off poverty (or need to beg); drives away hunger from his kinsmen and from his *pitṛs* (deceased ancestors). He who knows thus begs alms only from that housewife in whom he has confidence (she who will not look down upon him as an ordinary beggar); because it (such a *bhikṣā*) wins him the heaven. If he does not find another woman fit to be approached for alms, let him approach his own preceptor's wife and thereafter his own mother. The seventh shall not pass away for him without begging for alms (i.e. he shall not desist from *bhikṣācaraṇa* for more than seven nights). Knowing thus, he who goes about (begging for alms), into him, all the Vedas enter; just as the fire-blazes forth by *samidhās*, the one who knowing thus observes *brahmacarya* shines forth after licking the final ablution. (Second Brāhmaṇa Ends.)

**(Chapter Three Ends.)**

# चतुर्थोऽध्यायः

## प्रथमं ब्राह्मणम्

उद्दालकोहारुणिरुदीच्यान्वृतो धावयाञ्चकार तस्य निष्क उपाहित आसैतद्ध स्म वै तत्पूर्वेषां वृतानां धावयतामेकधनमुपाहितं भवत्युपवल्हाय बिभ्यतां तान्होदीच्यानां ब्राह्मणान् भीर्विवेद कौरुपाञ्चालो वा अयं ब्रह्मपुत्रो यद्वै नोऽयमर्धं न पर्याददीत हन्तैनं ब्रह्मोद्यमाह्वयामहा इति केन वीरेणेति स्वैदायनेनेति शौनको ह स्वैदायन आस॥१॥

ते होचुः स्वैदायन त्वया वीरेणेमं प्रति संयतामहा इति स होवाचोपात्र खलु रमताहं न्वेनं वेदानीति तꣳ हाभिप्रपेदे तꣳ हाभिप्रपन्नमभ्युवाद स्वैदायना३ इति हो३ गौतमस्य पुत्रेतीतरः प्रतिशुश्राव तꣳ ह तत एव प्रष्टुं दध्रे॥२॥

स वै गौतमस्य पुत्र वृतो जनं धावयेद्यो दर्शपूर्णमासयोरष्टौ पुरस्तादाज्यभागान्विद्यात्पञ्च मध्यतो हविर्भागान् षट्प्राजापत्यानष्टा उपरिष्टादाज्यभागान्॥३॥

स वै गौतमस्य पुत्र वृतो जनं धावयेद्यस्तद्दर्शपूर्णमासयोर्विद्याद्यस्मादिमाः प्रजा अदन्तका जायन्ते यस्मादासां जायन्ते यस्मादासां प्रभिद्यन्ते यस्मादासाꣳ सन्तिष्ठन्ते यस्मादासां पुनरुत्तमे वयसि सर्व एव प्रभिद्यन्ते यस्मादधर एवाग्रे जायन्तेऽथोत्तरे यस्मादणीयाꣳस एवाधरे प्रथीयाꣳस उत्तरे यस्माद्दꣳष्ट्रा वर्षीयाꣳसो यस्मात्समा एव जंभ्याः॥४॥

## Chapter Four

### BRĀHMAṆA I

**1.** Now Uddālaka, the son of Āruṇa, invited to officiate as sacrificial priest, went about the northern parts of the country. He was offered a prize of one gold coin. Because in the past there used to be offered a prize of one gold coin to those who were rushing to officiate as priests (to be won by the best among them) and for that (completion)the priests of the northern region were vying with each other. Now fear seized those brahmins of the north (because of Uddālaka's arrival to challenge them). (They deliber-ated) "This son of a learned brahmin is from the Kuru-Pāñcāla country and he may deprive us of our domain. Let us challenge him on a disputa-tion on metaphysical subject." (Then the question arose) "With whom as our leader (we can challenge him)." (They decided) "With Svaidāyana (as our spokesman)." Svaidāyana was of the Śaunaka family.

**2.** They said "O Svaidāyana, we shall defeat this (enemy) with you as our leader." He (Svaidāyana) said, "You all remain here in peace; I will just go and know (about) him." He then proceeded to him (Uddālaka). When Svaidāyana approached him, Uddālaka addressed him, "O Svaidāyana and the latter responded, O son of Gautama" – and straight away started ques-tioning him (as follows) –

**3.** "He alone, O son of Gautama; may drive about (victorious) among people as chosen priest, who knows the eight *ājyabhāgas* offered in the start-ing, five oblations made in the middle; six portions offered to Prajāpati and eight *ājyabhāgas* offered at the end – all of the *Darśa Pūrṇamāsa* sacrifices?"

**4.** "He alone, O son of Gautama; may drive about (victorious) among people as chose priest, who knows from the *Darśa Purṇamāsa* sacrifices, why creatures here are born without teeth; why they then grow; why they fall; why they(again grow) and stay on; why again at old age they fall (or decay); why lower line teeth are first appearing and then the upper line teeth; why the lower teeth are small and the upper ones are broader; and why the biting teeth (frontal ones) are longer and the palatel ones are of equal size?"

स वै गौतमस्य पुत्र वृतो जनं धावयेद्यस्तद्दर्शपूर्णमासयोर्विद्याद्यस्मादिमाः प्रजा लोमशा जायन्ते यस्मादासां पुनरिव श्मश्रूण्यौपपक्ष्याणि दुर्बीरिणानि जायन्ते यस्माच्छीर्षिण्येवाग्रे पलितो भवत्यथ पुनरुत्तमे वयसि सर्वा एव पलितो भवति॥५॥

स वै गौतमस्य पुत्र वृतो जनं धावयेद्यस्तद्दर्शपूर्णमासयोर्विद्याद्यस्मात्कुमारस्य रेतः सिक्तं न संभवति यस्मादस्य मध्यमे वयसि संभवति[1] पुनरुत्तमे वयसि न संभवति यो गायत्रीꣳ हरिणीं ज्योतिष्पक्षां यजमानꣳ स्वर्गं लोकमभिवहन्तीं विद्यादिति तस्मै ह निष्कं प्रददावनूचानः स्वैदायनासि सुवर्णं वाव सुवर्णविदे ददतीति तꣳ होपगुह्य निश्चक्राम तꣳ ह प्रपच्छुः किमिवैष गौतमस्य पुत्रोऽभूदिति॥६॥

स होवाच यथा ब्रह्मा ब्रह्मपुत्रो मूर्धास्य निपतेद्य एनमुपवल्हेतेति ते ह तत एव विप्रेयुस्तꣳह तत एव समित्पाणिः प्रतिचक्रम उप त्वायानीति किमध्येष्यमाण इति यानेव मा प्रश्नानप्राक्षीस्तानेव मे विब्रूहीति॥७॥

स होवाचानुपेतायैव त एतान् ब्रुवाणीति तस्मा उ हैतदुवाच द्वावाधारौ पञ्च प्रयाजा आग्नेय आज्यभागोऽष्टम एतेऽष्टौ पुरस्तादाज्यभागाः सौम्य आज्यभागो हविर्भागाणां प्रथमो हविर्हि सोम आग्नेयः पुरोळाशोऽग्नीषोमीय उपाꣳशुयाजोऽग्नीषोमीयः पुरोळाशोऽग्निः स्विष्टकृदेते पञ्च मध्यतो हविर्भागाः प्राशित्रं चेळा च यच्चाग्नीध आदधाति ब्रह्मभागो यजमानभागोऽन्वाहार्य

१. संभवति यस्मादस्य पुनः V2, My

5. "He alone, O son of Gautama; may drive about (victorious) among people as chosen priest who knows from *Darśa Pūrṇamāsa* sacrifices, as to why these creatures here are born with hair; why later the hair grows again as it were, on the beard, arm-pits and other (remote) parts of the body; why on the head alone they become grey at first; and why in the old age they become grey all about ?"

6. "He alone, O son of Gautama; may drive about (victorious) among people as chosen priest, who knows from the *Darśa Pūrṇamāsa* sacrifices as to why the semen discharged at the stage of boyhood is not productive; why it is productive in his adult stage and why again in the last stage of his life it becomes unproductive; and he who knows the golden Gāyatrī of dazzling wings carrying the Yajamāna to the heavenly world ?" Then he (Uddālaka) surrendered to him the gold coin (the one betted) saying, "O Svaidāyana you are learned and surely gold is given to one who knows gold (who knows well what is to be explained)" and after hugging him (in appreciation), he went away. They (the others among the priests of the northern region) asked him, "What happened to that son of Gautama ?"

7. He said, "No doubt he (Uddālaka) is brahmin, being the son of the brahmin (even though he is not *upanīta* or initiated). Whoever makes this person (Uddālaka) a venerable priest, his head will fall (he will die)." They (the other priests of the northern country) then dispersed. Then he (Uddālaka) with *samidhā* in hand (as a mark of studentship) returned to Svaidāyana saying, "I seek you (as my teacher)." "What do you want to study", (asked Svaidāyana). (Uddālaka said) "Those very questions which you asked me, please explain them."

8. He said, "I shall explain those to you even without formal initiation (i.e. you are so great a brahmin that I don't dare to accept you as my pupil)." He then told him, "The two offerings of *ghee*, the five *prayājās*(fore-offerings) and the *ājyabhāga* for Agni as the eighth — these are the eight *ājyabhāgas* offered in the starting. The *ājyabhāga* of *Soma*, being the first of the portions of *havis* — for *Soma* is *havirbhāga* — the *puroḍāśa* meant for Agni, the low-voiced *Upāṁśu* offering to Agni-*Soma*, the *puroḍāśa* for Agni-*Soma* and the *Sviṣṭakṛt* offering to Agni — these constitute the five sacrificial oblations offered in the middle. The *prāśitra*, the *iḍā*; that which he gives to the Agnīdha; the share of Brahmā, the Yajamāna's share; and the *anvāhārya*

एते षट् प्राजापत्यास्त्रयोऽनुयाजाश्चत्वारः पत्नीसंयाजाः समिष्टयजुरष्टममेतेऽष्टा उपरिष्टादाज्यभागाः॥८॥

अथ यदपुरोऽनुवाक्यकाः प्रयाजा भवन्ति तस्मादिमाः प्रजा अदन्तका जायन्तेऽथ यत्पुरोऽनुवाक्यवन्ति हवीꣳषि भवन्ति तस्मादासां जायन्तेऽथ यदपुरोऽनुवाक्यका अनुयाजा भवन्ति तस्मादासां प्रभिद्यन्तेऽथ यत्पुरोऽनुवाक्यवन्तः पत्नीसंयाजा भवन्ति तस्मादासाꣳसन्तिष्ठन्तेऽथ यदपुरोऽनुवाक्यकꣳ समिष्टयजुर्भवति तस्मादासां पुनरुत्तमे वयसि सर्व एव प्रभिद्यन्ते॥९॥

अथ यदनुवाक्यामनूच्य याज्यया यजति तस्मादधर एवाग्रे जायन्तेऽथोत्तरेऽथ यद्गायत्रीमनूच्य त्रिष्टुभा यजति तस्मादणीयाꣳस एवाधरे प्रथीयाꣳस उत्तरेऽथ यत्प्राञ्चावाधारावाधारयति तस्माद्दꣳष्ट्रा वर्षीयाꣳसोऽथ यत्सच्छन्दसावेव संयाज्ये भवतस्तस्मात्समा एव जम्भ्याः॥१०॥

अथ यद्बर्हिस्तृणाति तस्मादिमाः प्रजा लोमशा जायन्तेऽथ यत्पुनरिव प्रस्तरꣳ स्तृणाति तस्मादासां पुनरिव श्मश्रूण्यौपपक्ष्याणि दुर्वीरिणानि जायन्तेऽथ यत्केवलमेवाग्रे प्रस्तरमनुप्रहरति तस्माच्छीर्षण्येवाग्रे पलितो भवत्यथ यत्सर्वमेव बर्हिरनुप्रहरति तस्मात्पुनरुत्तमे वयसि सर्व एव पलितो भवति॥११॥

अथ यदाज्यहविषः प्रयाजा भवन्ति तस्मात्कुमारस्य रेतः सिक्तं न संभवत्युदकमेवैव भवत्युदकमेव ह्याज्यमथ यन्मध्ये यज्ञस्य दध्ना पुरोलाशेनेति यजन्ति[1] तस्मादस्य मध्यसे

१. चरन्ति as alternative reading in TE

(rice cooked for the consumption of the *ṛtviks* in general) — these constitute the six portions of Prajāpati. The three *anuyājās* (after-offerings), the four *patnīsaṁyājās* and the *samiṣṭayajus* as the eighth — these are the eight *ājyabhāga* at the end.

**9.** Since the *prayājās* (fore-offerings) are without being accompanied by *puronuvākyās* (invitatory formulas), these creatures are born without teeth. Since the (subsequent) *havis* offerings are accompanied by the chanting of *puronuvākyas*, these teeth grow later. Again since the *anuyājās* (after-offerings) are without invitatory formulas, they (teeth) fall. Later the *patnīsaṁyājās* are accompanied by *puronuvākyas* and so they (teeth) again come to stay. The *samiṣṭayajus* that follows at the end has again no invitatory formula and that is why all of them decay at old age.

**10.** After chanting the invitatory formula, he makes the offering with the *yājya* (offering) formula and hence the teeth in the lower row appear first and then those in the upper row. He utters (the invitatory) verse in Gāyatrī metre (with twenty-four syllables) and offers with the *yājya* verse in Triṣṭubh (with forty-four syllables). That is the reason for the teeth in the lower row being thinner and those in the upper row being broader. He pours the *āghāras* (ten *ghee* sprinklings) from back to front and hence the frontal teeth are longer. Since the two *saṁyājās* (the invitatory and the offering formulas) are of the same metre (for the *Sviṣṭakṛt* offering) the palatal teeth are of same size.

**11.** He spreads the *barhi* grass which accounts for these creatures being born with hair. In as much as he again, as it were, spreads *prastara* (bunch of grass spread over the *barhis*) the hair later grows again as it were, on the beard, arm-pits and other (remote) parts of the body. Later he first throws only the *prastara* (into the fire after oblations), the hair on the head becomes grey first. Lastly he throws all the sacrificial grass spread on the *vedī* (into the fire) and so in the last stage of life hair becomes grey all over.

**12.** The *prayājās* (fore-offerings) have *ghee* as their offering material and that is why a boys semen is not productive; but is like water and *ghee* is indeed only like water. In the middle of the sacrifice the offerings are made with sour curds and *puroḍāśa*, it (the seed of the adult) is productive in the middle stage of life, because they (the offerings) are thick (not watery) and the seed also is thick (viscous), as it were (in adult stage). The *anuyājās*

वयसि संभवति द्रप्सीवैव भवति द्रप्सीव हि रेतोऽथ यदाज्यहविष एवानुयाजा भवन्ति तस्मादस्य पुनरुत्तमे वयसि न संभवत्युदकमेवैव भवत्युदकमेव ह्याज्यं वेदिरेव गायत्री तस्यै येऽष्टौ पुरस्तादाज्यभागाः स दक्षिणः पक्षो येऽष्टा उपरिष्टादाज्यभागाः स उत्तरः पक्षः सैषा गायत्री हरिणी ज्योतिष्पक्षा यजमानꣳ स्वर्गं लोकमभिवहति य एवमेतद्वेद॥१२॥इति प्रथमं ब्राह्मणम्॥

## द्वितीयं ब्राह्मणम्

अथातः स्रुचोरादानस्य तद्धैतदेके कुशला मन्यमाना दक्षिणेनैव जुहूमाददते सव्येनोपभृतं स तथा कुर्याद्यो हैनं तत्र ब्रूयात्प्रतिप्रतिं न्वा अयमध्वर्युर्यजमानस्य द्विषन्तं भ्रातृव्यमकत्प्रत्युद्यामिनमितीश्वरो ह तथैव स्यादित्थमेव कुर्यादुभाभ्यामेव पाणिभ्यां जुहूं परिगृह्योपभृत्यधिनिदध्यात्तस्य नोपमीमाꣳसास्ति तत्पशव्यमायुष्यं ते असꣳशिञ्चयन्नाददीत[1] यत्सꣳशिञ्चयेदयोगक्षेमो यजमानमृच्छेत्तस्मादसꣳ शिञ्चयन्नाददीत॥१॥

अथातोऽतिक्रमणस्य वज्रेण ह वा अन्योऽध्वर्युर्यजमानस्य पशून्विधमति वज्रेण हास्मा अन्य उपसमूहत्येष ह वा अध्वर्युर्वज्रेण यजमानस्य पशून्विधमति य आश्रावयिष्यन्दक्षिणेनातिक्रामति सव्येनाश्राव्याथ हास्मा एष उपसमूहति य आश्रावयिष्यन्त्सव्येनातिक्रामति दक्षिणेन नाश्राव्यैष हास्मा उपसमूहति॥२॥

अथातो धारणस्य तद्धैतदेके कुशला मन्यमानाः प्रगृह्य बाहू स्रुचौ धारयन्ति न तथा कुर्याद्यो

१. आददीते V2, My

(after-offerings) have *ghee* for their offering material and hence again it (seed) is not productive in old age and is like water, for *ghee* is indeed like water. The *vedī* (altar) itself is the Gāyatrī. The former eight *ājyabhāgās* offered are her right wing. The eight subsequent *ājyabhāgās* are her left wing. That same golden bird Gāyatrī with shining wings, indeed carries the Yajamāna who knows this, to the heavenly world. (First Brāhmaṇa Ends.)

**BRĀHMAṆA II**

1. Now the taking up of the two *sruks* (will be discussed). Some people who assume they are experts, take up the *juhu*, with right hand and the *upabhṛt* with the left hand. But let him not do so. In that context, if any one were to say of him, "Surely, this Adhvaryu has rendered the Yajamāna's hated enemy on a par with him and capable of challenging him, then that would indeed be likely to come true." It should be done like this – with both the hands the *juhu* should be taken and placed over the *upabhṛt*. There is no arguing about this (procedure). It is for the welfare of the cattle and for longevity of life. Let him take them up without producing clinking sound. Were he to make them clink with each other, the Yajamāna will meet with loss of his well-being; so one should take them without producing clinking sound.

2. Now for the *atikramaṇa* (stepping past the *vedī*) – one Adhvaryu drives away the cattle of the Yajamāna with a thunderbolt (causes the Yajamāna to lose his cattle wealth by adopting a wrong procedure of *atikramaṇa*) and the other Adhvaryu (who follows the right procedure) collects the cattle near to the Yajamāna by using a thunderbolt. Now that Adhvaryu who steps past (the *vedī*) with his right foot while proceeding to call (on the *Āgnīdhra*) to pronounce *śrauṣat* and with his left foot (steps past) after having called for the *śrauṣat*, he is driving the cattle away from the Yajamāna. When (on the other hand) he steps past (the *vedī*) with his left foot while proceeding to a call for *śrauṣat* and with his right foot steps past after having called for *śrauṣat*, he does indeed collect together the cattle for the Yajamāna.

3. Now (the procedure regarding) holding of the *sruks* – some persons who think they are wise, hold the two *sruks* without strectched hands. Let him not do so. When he does so, if anyone were to remark "Surely this Adhvaryu has made his two arms as a pair of spears, he will become a spear-

हैनं तत्र ब्रूयाच्छूलौ न्वाऽयमध्वर्युर्बाहू अकृतशूलबाहुर्भविष्यतीतीश्वरो ह तदैव स्यादथ हैष मध्यमः प्राणस्तस्मादु तमुपन्यच्येवैव धारयेत्॥३॥

अथात आश्रावणस्य षड्ढ वा आश्रावितानि न्यक्तिर्यगूर्ध्वं कृपणं बहिः श्र्यन्तः श्र्येतद्ध वै न्यग्योऽयमुच्चैरादाय शनैर्निदधाति स यमिच्छेत्पापीयान्त्स्यादिति तस्योच्चैरादाय शनैर्निदध्यात्तेन स पापीयान् भवति॥४॥

अथ हैतत्तिर्यग्योऽयं यावतैवादत्ते[२] तावता निदधाति स यमिच्छेन्नैव श्रेयान्त्स्यान्न पापीयानिति तस्य यावतैवाददीत तावता निदध्यात्तेन स नैव श्रेयान्न पापीयान् भवति॥५॥

अथ हैतदूर्ध्वं योऽयꣳ शनैरादायोच्चैर्निदधाति स यमिच्छेच्छ्रेयान्त्स्यादिति तस्य शनैरादायोच्चैर्निदध्यात्तेन स श्रेयान् भवति॥६॥

अथ हैतत्कृपणं योऽयमणु दीर्घमस्वरमाश्रावयति यो हैनं तत्र ब्रूयात्कृपणं न्वा अयमध्वर्युर्यजमानमकद्विवषतो भ्रातृव्यस्योपावसायिनमितीश्वरो ह तद्धैव स्यात्॥७॥

अथ हैतद्बहिः श्रियोऽयमपव्यादायौष्ठा उच्चैरस्वरमाश्रावयति श्रीर्वै स्वरो बाह्यत एव तच्छ्रियं धत्तेऽशनायुको भवति॥८॥

अथ हैतदन्तः श्रियोऽयꣳ संधायौष्ठा उच्चैः स्वरवदाश्रावयति श्रीर्वै स्वरोऽन्तरत एव तच्छ्रियं

२. यावतैवाददीत H, P1

holder" and this (forecast) will happen to come true. This navel is the central breath (seat of breath in the middle of the body) and he should make that middle channel bent and hold the *sruks* by its side (i.e. the *sruks* are to be held at the level of the navel made to tend downward by holding the breath in the abdomen).

**4.** Now about *āśrāvaṇa* (or calling for the *śrauṣat*) – There are six varieties of *āśrāvaṇa*, namely, the descending (tone); the even; the ascending; the feeble; the open-mouthed (outward tending) and the inward tending. In the descending mode he begins in a loud tone and ends in a low tone. If one wants him (the Yajamāna) to be extremely impoverished, for him he (the Adhvaryu) starts in a high tone and ends up in a low tone and thereby he (Yajamāna) becomes poorer.

**5.** The even one is that in which he ends up in the same tone in which he commenced. If he (Adhvaryu) wants the Yajamāna neither to become more prosperous nor poorer, for him (he does the *āśrāvaṇa*) ending in the same tone as it started and by that he neither becomes richer nor poorer.

**6.** The ascending variety is that in which it is started in a low tone and concludes in a loud pitch. For that one (Yajamāna) whom he wishes to prosper more, he starts in a low tone and ends up a high tone and by that he becomes more prosperous.

**7.** The feeble variety is indeed the one where he calls for *śrauṣat* in a thin, long-drawn emaciated voice. In his case if anyone were to remark, "This Adhvaryu has surely rendered the Yajamāna weak and submissive to his hated foe" then that would indeed happen so.

**8.** The outward-tending type of *āśrāvana* is one in which he opens his lips wide and makes the call at a high toneless pitch. Tone being prosperity, he in this process keeps prosperity outside and starves of food.

**9.** The inward-tending variety of *āśrāvaṇa* is one in which he closes his lips and makes the call in a loud toneful pitch. Tone being prosperity, in this way he puts prosperity inside himself and becomes an enjoyer of food (wealth). Having kept back (the tone) deep in the breast as it were, let him keep the middle pitch of the *bṛhat Sāman* both at the start and at the closing

धत्तेऽन्नादो भवति स वै मन्द्रमिवोरसि परास्तभ्योभयतो बार्हतमुच्चैरन्ततो निदध्यात्तस्य नोपमीमाꣳसास्ति तत्पशव्यमायुष्यम्॥९॥

अथातो होमस्य तद्धैतदेके कुशला मन्यमानाः प्राचीꣳ स्रुचमुपावहृत्य हुत्वा पर्याहृत्योपभृत्यधि निदधति न तथा कुर्याद्यो हैनं तत्र ब्रूयादनुयुवं न्वा अयमध्वर्युर्यजमानमकद्विषतो भ्रातृव्यस्यान्ववसायिनमितीश्वरो ह तथैव स्यात्पार्श्वत उ हैके स्रुचमुपावहृत्य हुत्वा पर्याहृत्योपभृत्यधि निदधति न तथा कुर्याद्यो हैनं तत्र ब्रूयादतीर्थेन न्वा अयमध्वर्युराहुतीः प्रारौत्सीत्सं वा शरिष्यते घुणिर्वा भविष्यतीतीश्वरो ह तथैव स्यादित्थमेव कुर्यात्प्राचीमेव स्रुचमुपावहृत्य हुत्वा तेनैवाधिहृत्योपभृत्यधि निदध्यात्तस्य नोपमीमाꣳसास्ति तत्पशव्यमायुष्यम्॥१०॥

प्रदग्धाहुतिर्ह वा अन्योऽध्वर्युराहुतीर्हान्यः संतर्पयत्येष ह वै प्रदग्धाहुतिरध्वर्युर्योऽयमाज्यꣳ हुत्वावदानानि जुहोत्येतꣳ ह वै तददृश्यमाना वागभ्युवाद प्रदग्धाहुतिर्न्वा अयमध्वर्युरित्यथ हैना एष सन्तर्पयति योऽयमाज्यꣳ हुत्वावदानानि जुहोत्यथ पुनरन्तत आज्येनाभिजुहोत्येष हैनाः सन्तर्पयति तासाꣳ संतृप्तानां देवा हिरणमयाꣳश्चमसान् पूरयन्ते॥११॥

तदु होवाच याज्ञवल्क्यो यद्वा उपस्तीर्यावदायाभिघारयति तदेवैनाः सन्तर्पयति ता-साꣳ संतृप्तानां देवा हिरणमयाꣳश्चमसान् पूरयन्तेऽयस्थूणगृहपतीनाꣳ ह वै शौल्वायनोऽध्वर्युरास॥१२॥

स होवाचेदमहेदꣳ सत्रं कृशपश्वल्पाज्यमथायं गृहपतिरस्मीति मन्यत इति॥१३॥

and end up in the loud tone (*tāra*). There is no dispute about this since it enables to get cattle (wealth) and enhances life-span.

**10.** Now about the *homa* (offering in the fire) – some people who claim to be smart, having turned the *sruk* by moving it towards the east, pour out the oblation, turn it round and place it on the *upabhṛt*. Let him not do so. While doing as if someone remarks, "This Adhvaryu has rendered his Yajamāna dependent upon and submissive to his hateful enemies", then that would indeed be likely to come to pass. Some people having poured out from the *sruk* by turning it sideways, turn it round and place it on the *upabhṛt*. But let him not do so. In that case, if anyone were to say, "This Adhvaryu has blocked the oblations by adopting a wrong procedure and he (the Yajamāna) will be shattered or will become one eaten by worms", then that would indeed come to be true. In this (following) way alone it should be done – after turning the *sruk* eastwards and offering made, let him convey it up in the same way (i.e. tilted eastward) and place it on the *upabhṛt*. There can be no dispute about this, since it adds to cattle (wealth) and to life-span.

**11.** One (type of) Adhvaryu renders the oblation burnt (charred) and another pleases the oblations. That Adhvaryu, who after offering *ghee*, offers portions of *havis* (called *avadānas*), verily burns the oblations. With regard to him, an invisible (source's) voice has declared, "This Adhvaryu has rendered the oblations burnt or charred." That Adhvaryu who after offering *ghee*, offers the *avadānas* and at the end again offers *ghee*, is considered as one who pleases the oblations and these oblations having been pleased, the gods fill gold cups (for him).

**12.** In this connection, Yājñavalkya said, "In as much as he makes an under-layer of *ghee* (in the *sruk*), before placing the *avadānas* (cut portions of oblations) and again sprinkles *ghee* over them, by that itself he pleases the oblations. They being satisfied, the gods fill (for him) gold cups. Now Śaulvāyana was Adhvaryu to those who had *āyasthūṇa* as their family head.

**13.** He (Śaulvāyana) said, "Surely this sacrificial session is conducted with emaciated *paśus* and very little *ghee* and this person claims himself the family head."

स होवाचाध्वर्यवा वै नोऽक्रुक्ष[3] एते वै ते स्रुचौ ये त्वꣳ संवत्सरं नाशक आदातुं यद्वै त्वाहमेतयोरनुशिष्यां प्र प्रजया पशुभिर्जयेथा अभि स्वर्गं लोकं वहेरिति॥१४॥

स होवाचोप त्वयानीति स होवाचात्र वाव खल्वर्हसि यो नः संवत्सरेऽध्वर्युरभूरनुपेतायैव त एनद्ब्रवाणीति[4] तस्मा उ हैतदेव स्रुचोरादानमुवाच यदेतद्व्याख्यामि तस्मादेवं विदमेवाध्वर्युं कुर्वीत नानेवंविदम्॥१५॥इति द्वितीयं ब्राह्मणम्॥

## तृतीयं ब्राह्मणम्

प्रजापतिर्वै प्रजाः सृजमानोऽतप्यत तस्माच्छ्रान्तात्तेपानाच्छ्रीरुदक्रामत्सा दीप्यमाना भ्राजमाना लेलायन्त्यतिष्ठत्तां दीप्यमानां भ्राजमानां लेलायन्तीं देवा अभ्यध्यायन्॥१॥

ते प्रजापतिमब्रुवन् हनामेमामेदमस्या ददामहा इति स होवाच स्त्री वा एषा यच्छ्रीर्न वै स्त्रियं घ्नन्त्युत त्वा अस्या जीवन्त्या एवाददत इति॥२॥

तस्या अग्निरन्नाद्यमादत्त सोमो राज्यं वरुणः साम्राज्यं मित्रः क्षत्रमिन्द्रो बलं बृहस्पतिर्ब्रह्मवर्चसꣳ सविता राष्ट्रं पूषा भगꣳ सरस्वती पुष्टिं त्वष्टा रूपाणि॥३॥

सा प्रजापतिम ब्रवीदा वै म इदमदिषतेति स होवाच यज्ञेनैनान् पुनर्याचस्वेति॥४॥

सैतां दशहविषमिष्टिमपश्यदाग्नेयमष्टाकपालं पुरोळाशꣳ सौम्यं चरुं वारुणं दशकपालं पुरोळाशं मैत्रं चरुमैन्द्रमेकादशकपालं पुरोळाशं बार्हस्पत्यं चरुꣳ सावित्रं द्वादशकपालं वाष्टाकपालं वा पुरोळाशं पौष्णं चरुꣳ सारस्वतं चरुं त्वाष्ट्रं दशकपालं पुरोळाशम्॥५॥

३. न आक्रुक्षः
४. एतद् TE

14. He (Āyasthūṇa) said, "Adhvaryu ! You have insulted us. Now those two *sruks* are there which you have not, for a whole year, succeeded in taking up (handling in the proper way). If I were to instruct you (how to handle them) you would become richer with progeny and cattle (wealth) and would lead (the Yajamāna) to the heavenly world."

15. He said, "Admit me as your pupil." He (Āyasthūṇa) said, "You have officiated as Adhvaryu for one year and so I shall instruct you even without you formally becoming my pupil." So he taught him this method of taking up the two *sruks* as explained (above) by us. So one has to appoint only such a person as his Adhvaryu, who knows this and not one who does not know this. (Second Brāhmaṇa Ends.)

**BRĀHMAṆA III**

1. Prajāpati underwent suffering (got heated) by creating the living beings. As he became worn out, his *Śrī* (charm or glory) came out of him and stood there brilliant, shining and pervading as it were. The gods got enamoured of that brilliant, shining and pervasive charm.

2. They asked Prajāpati, "Let us finish her (*Śrī*) and take away all these (glory, brilliance and pervasive beauty) from her." He said, "This *Śrī* is indeed a woman. One does not kill a woman. However you take anything you desire from her even while leaving her alive."

3. Then Agni took nourishment from her; Soma took away her royalty; Varuṇa her imperial power; Mitra took her martial valour; Indra, her strength; Bṛhaspati grabbed her brahminical lustre; Savitā, her kingship; Pūṣā took her wealth; Sarasvatī, her prosperity and Tvaṣṭā took away her beautiful forms.

4. She said to Prajāpati, "See; they have taken away (all) this from me." He said, "Ask for these back by performing sacrifice."

5. She then discovered this *iṣṭi* (sacrificial rite) involving ten offerings. They being – *puroḍāśa* in eight potsherds for Agni; a *caru* for Soma; *puroḍāśa* in ten potsherds for Varuṇa; a *caru* for Mitra; *puroḍāśa* in eleven potsherds for Indra; a *caru* for Bṛhaspati; *puroḍāśa* in twelve or eight potsherds for Savitā; a *caru* for Pūṣā; a *caru* for Sarasvatī and *puroḍāśa* in ten potsherds for Tvaṣṭā.

तानेतयानुवाक्ययान्ववदग्निः सोमो वरुणो मित्र इन्द्रो बृहस्पतिः सविता यः सहस्त्री पूषा नो गोभिरवसा सरस्वती त्वष्टा रूपाणि समनक्तु यज्ञैरिति ते प्रत्युपातिष्ठन्त॥६॥

तानेतया याज्यया परस्तात्प्रतिलोमं प्रत्यैत्वष्टा रूपाणि ददती सरस्वती पूषा भगꣳ सविता मे ददातु बृहस्पतिर्ददिन्द्रो बलं मे मित्रः क्षत्रं वरुणः सोमो अग्निरिति ते पुनर्दानायाध्रियन्त सैतानुपहोमानपश्यत्॥७॥

अग्निरन्नादोऽन्नपतिरन्नाद्यमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादायाग्निरुदक्रामत्पुनरस्या अन्नाद्यमददात्॥८॥

सोमो राजा राजपती राज्यमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय सोम उदत्क्रामत्पुनरस्यै राज्यमददात्॥९॥

वरुणः सम्राट् सम्राट्पतिः साम्राज्यमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय वरुण उदक्रामत्पुनरस्यै साम्राज्यमददान्मित्रः क्षत्रं क्षत्रपतिः क्षत्रमस्मिन् यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय मित्र उदक्रामत्पुनरस्यै क्षत्रमददात्॥१०॥

इन्द्रो बलं बलपतिर्बलमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादायेन्द्र उदक्रामत्पुनरस्यै बलमददात्॥११॥

बृहस्पतिर्ब्रह्म ब्रह्मपतिर्ब्रह्मवर्चसमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय बृहस्पतिरुदक्रामत्पुनरस्यै ब्रह्मवर्चसमददात्॥१२॥

सविता राष्ट्रꣳ राष्ट्रपती राष्ट्रमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय सवितोदक्रामत्पुनरस्यै राष्ट्रमददात्॥१३॥

